लण्डपिण्डबद्धास्तत्प्रतीवापास्तदवलेपा वा विशुद्धाः स्रवन्ति ।

यवमाषातिलपलाशपीलुक्षारैर्गोक्षीराजक्षीरैर्वा कदलीवज्रकन्द-प्रतीवापो मार्दवकरः ।

मधु मधुकमजापयः सतैलं घृतगुडकिण्वयुतं सकन्दलीकम् ।
यदपि शतसहस्रधा विभिन्नं भवति मृदु त्रिभिरेव तन्निषेकैः ॥

गोदन्तशृङ्गप्रतीवापो मृदुस्तम्भनः ।

---

तीक्ष्णमूत्रं नरमूत्रमित्येके गजाश्वगोगर्दभच्छागमूत्रमित्यपरे इति स्वामी तीक्ष्ण-क्षारः कदल्यपामार्गादिभस्म ताभ्यां भाविताः असकृत् सेचनादिना संस्कृताः, राजवृक्षवटपीलुगोपित्तरोचनामहिषखरकरभमूत्रलण्डपिण्डबद्धाः राजवृक्षः श-म्याकः वटः प्रसिद्धः पीलुर्गुडफलाख्यो वृक्षः गोपित्तरोचना गोपित्तं गोरोचना च महिषखरकरभमूत्रलण्डं सैरिभगर्दभबालोष्ट्राणां मूत्रपुरीषम् एतैः पिण्डबद्धाः राजवृक्षादिकल्कैर्महिषादिमूत्रलण्डेन च सह मिश्रितैरुक्ततीक्ष्णमूत्रक्षारभावि-तस्यात्मनश्चूर्णैर्बद्धपिण्डा इत्यर्थः, तत्प्रतीवापाः राजवृक्षादिचूर्णकृतप्रतीवापाः, तदवलेपा वा तच्चूर्णकृतोपलेपा वा सन्तः, विशुद्धाः द्रव्यान्तरसंसर्गजदोष-निर्मुक्ताः, स्रवन्ति मूढगर्भतापहानेन सत्त्वमुद्गिरन्ति ।

यवमाषतिलपलाशपीलुभस्मभिर्गोक्षीराजक्षीरैश्च सम्मिश्रिताभ्यां कदली-कन्दवनसूरणकन्दाभ्यां प्रतीवापात् स्वर्णरूप्ययोर्मार्दवमुपजायत इत्याह— यवमाषेत्यादि । इह वेत्यन्तस्य विशुद्धाः स्रवन्तीत्यनेन सम्बन्धं मत्वा यव-क्षारादिभिः साधनैः पूर्ववत् पिण्डबन्धनादिविधया वा धातवो विशुद्धाः स्रव-न्तीत्यर्थं केचिद् वर्णयन्ति ।

मृदूकारप्रकारान्तरं श्लोकेनाह— मधुमधुकमिति । सतैलं, घृतगुड-किण्वयुतं सर्पिश्शर्करासुराबीजसहितं, सकन्दलीकं कच्छजझाटभेदयुक्तं, यत्, मधु क्षौद्रं, मधुकं यष्ट्याख्यम्, अजापयः छागीक्षीरं च, त्रिभिरेव, तन्निषेकैः निषेको नाम स्वर्णादावौषधकल्कनिक्षेपः मध्वाद्यष्टककल्कनिक्षेपैः, शतसहस्रधा विभिन्नमपि नानाप्रकारकाठिन्ययुक्तमपि स्वर्णादिकं, मृदु भवति ॥

मार्दवापायकरमाह—गोदन्तेत्यादि । गोदन्तशृङ्गप्रतीवापः गोर्दन्त-शृङ्गचूर्णयोर्द्रुतसुवर्णाद्युपरि प्रक्षेपः, मृदुस्तम्भनः मार्दवविलोपनो भवति । इति स्वर्णरूप्यधातुप्रकरणम् ।

भारिकः स्निग्धो मृदुश्च प्रस्तरधातुर्भूमिभागो वा पिङ्गलो हरितः पाटलो लोहितो वा ताम्रधातुः ।

काकमेचकः कपोतरोचनावर्णः श्वेतराजिनद्धो वा विस्रः सीसधातुः ।

ऊषरकर्बुरः पक्वलोष्टवर्णो वा त्रपुधातुः ।

कुरुम्बः पाण्डुरोहितः सिन्दुवारपुष्पवर्णो वा तीक्ष्णधातुः ।

काकाण्डभुजपत्रवर्णो वा वैकृन्तकधातुः ।

अच्छः स्निग्धः सप्रभो घोषवान् शीततीव्रस्तनुरागश्च मणिधातुः ।

---

अथ ताम्रधातुमाह— **भारिक** इति । भारिकः गुरुः, स्निग्धो मसृणः, मृदुश्च, प्रस्तरधातुः पाषाणधातुः, भूमिभागो वा भूमिधातुर्वा, ताम्रधातुः ताम्रयोनिर्भवति । तस्य चतुर्विधान् वर्णानाह — पिङ्गलः कपिलः, हरितो नीलः, पाटल ईषद्रक्तः, लोहितो वा रक्तो वा ।

सीसधातुमाह—**काकेत्यादि** । काकमेचकः काक इव कृष्णः, कपोतरोचनावर्णः कपोतवर्णो गोरोचनावर्णश्च, श्वेतराजिनद्धः धवललेखाबहुलः, विस्रो वा दुर्गन्धो वा, सीसधातुः सीससंज्ञलोहयोनिर्धातुर्भवति ।

त्रपुसंज्ञस्य शुक्लसीसस्य योनिं धातुमाह-- **ऊषरेत्यादि** । ऊषरकर्बुरः ऊषरदेशवदापाण्डुः, पक्वलोष्टवर्णो वा, त्रपुधातुः ।

अयोधातुमाह —**कुरुम्ब** इति । कुरुम्बः श्लक्ष्णपाषाणप्रायः इति स्वामी, पाण्डुरोहितः श्वेतरक्तः, सिन्दुवारपुष्पवर्णो निर्गुण्डीपुष्पवर्णः, वेति विकल्पे, तीक्ष्णधातुः तीक्ष्णम् अयः तद्योनिर्धातुर्भवति ।

वैकृन्तकधातुमाह—**काकाण्डेत्यादि** । काकाण्डभुजपत्रवर्णो वा काकाण्डवर्णो भूर्जपत्रवर्णो वा, क्वचिद् भूर्जेत्येव पाठः । काण्डेति पाठे काण्डो वृक्षजातिविशेष इति व्याख्येयम् । वैकृन्तकधातुः वैकृन्तकाख्यलोहविशेषयोनिर्धातुः । कांस्यादिकं तु तमरकादियुक्तताम्रादिनिष्पाद्यमिति तस्य न धात्वन्तरमस्ति । एवं लोहधातवः सप्ताभिहिताः ।

अथ मणिधातूनाह — **अच्छ** इति । अच्छो बिम्बग्राही, स्निग्धो मसृणः, सप्रभः सद्युतिः, घोषवान् अग्नितापने टङ्कच्छेदने च महाशब्दः,

धातुसमुत्थं तज्जातकर्मान्तेषु प्रयोजयेत् ।

कृतभाण्डव्यवहारमेकमुखम्, अत्ययं चान्यत्रकर्तृक्रेतृविक्रेतॄणां स्थापयेत् ।

आकरिकमपहरन्तमष्टगुणं दापयेदन्यत्र रत्नेभ्यः ।

स्तेनमनिसृष्टोपजीविनं च बद्धा कर्म कारयेद्, दण्डोपकारिणं च ।

---

शीततीव्रः अतिशीतस्वभावः अग्नेरपनयने क्षिप्रशीतो वा, तनुरागः अल्परागः, मणिधातुः मणियोनिर्धातुर्भवति । इयमत्र संग्रहार्या —

"कनकं रूप्यं ताम्रं सीसं त्रपु तीक्ष्णकं च वैकृन्तम् ।
मणयोऽष्टौ निर्दिष्टा अष्टानां धातवोऽप्यष्टौ ॥" इति ।

इत्थं धातुपरीक्षामुपदिश्य तत्कर्मान्तप्रवर्तनमधिकृत्याह — धातुसमुत्थमिति। धातुसमुत्थितमित्यपि पाठः। धातुभ्यः स्वल्पधनव्ययमयत्नेन प्रथममुत्पन्नं स्वर्णादिद्रव्यं, तज्जातकर्मान्तेषु धातुसम्बद्धकर्मस्थानेषु स्वर्णरूप्याद्याकरेषु, प्रयोजयेत् विनियुञ्जीत बहुतरोत्पत्त्यर्थम्। विनियोज्यस्य धातुसमुत्थत्ववचनं पूर्वपूर्वसम्यक्प्रवृत्तिफलोपलम्भे सत्येवोत्तरोत्तरप्रवृत्तिः कार्येति द्योतयितुम्।

कृतेत्यादि । कृतभाण्डव्यवहारं घटितसुवर्णादिभाण्डविक्रयम्, एकमुखम् एकद्वारकमेकविक्रयस्थानकं, स्थापयेत् प्रख्यापयेत् । अन्यत्रकर्तृक्रेतृविक्रेतॄणां स्थापितान्यदेशे भाण्डक्रियाक्रयविक्रयकारिणाम्, अत्ययं च दण्डं च 'पञ्चविंशतिपणमत्ययं चान्यत्रकर्तृक्रेतृविक्रेतृपरीक्षितृभ्य' इति लक्षणाध्यक्षोक्तं, स्थापयेत्। दण्ड इह द्रव्यसारतारतम्यापेक्षः शुल्काध्यक्ष-धर्मस्थीय-कण्टकशोधनोक्तोऽपराधानुरूपः कल्पनीयः प्रमाणाकथनादिति केचित् ।

आकरिकमिति । अपहरन्तम् आकराद् द्रव्यं हरन्तं, आकरिकम् आकरकर्मकरम्, अष्टगुणम् अपहृतद्रव्याष्टगुणमत्ययं दापयेत् । तत्रापवादमाह — अन्यत्र रत्नेभ्य इति । रत्नापहारे तु नायं दण्डः, किन्तु घातो वक्ष्यते ।

स्तेनमिति । स्तेनम् आकरिकमनाकरिकं वा चोरम्, अनिसृष्टोपजीविनं च विना राजानुमतिं धातुवादविषया वृत्तिं वर्तयन्तं च, बद्ध्वा निगडितं कृत्वा, बद्धमिति पाठेऽप्ययमेवार्थः, कर्म आकरव्यापारं, कारयेत् । दण्डोपकारिणं च महापराधेषु प्राड्विवाकनिर्णीतो देहदण्डप्रतिनिधिर्धनदण्डो

व्ययक्रियाभारिकमाकरं भागेन प्रक्रयेण वा दद्यात्, लाघविकमात्मना कारयेत् ।

लोहाध्यक्षः ताम्रसीसत्रपुवैकृन्तकारकूटवृत्तकंसताललोहकर्मान्तान् कारयेत्, लोहभाण्डव्यवहारं च ।

लक्षणाध्यक्षः चतुर्भागताम्रं रूप्यरूपं तीक्ष्णत्रपुसीसाञ्जनानामन्यतममाषबीजयुक्तं कारयेत् पणम्, अर्धपणं पादमष्टभागमिति ।

---

देहपीडापरिहारार्थत्वादपराधिनं प्रति उपकारो भवतीति दण्डोपकारः स उच्यते तद्धन्तं च अर्थाददत्तदण्डं, बद्ध्वा कर्म कारयेत् ।

व्ययक्रियेत्यादि । व्ययक्रियाभारिकं व्ययक्रिययोर्भारिकं गुरुं गुरुधनव्ययसाध्यं गुरुप्रयत्नसाध्यं चेत्यर्थः, आकरं, भागेन दद्याद् व्ययलाभभागव्यवस्थया परेषां प्रतिपादयेत् । प्रक्रयेण वा दद्यात् अस्याकरस्यैतावत् सुवर्णादिकं राजार्थे देयमिति परिपण्य वा परेषां दद्यात् । लाघविकं लघुव्ययसाध्यं लघुश्रमसाध्यं चाकरम्, आत्मना कारयेत् स्वयं व्यापारयेत् ।

अथावान्तराध्यक्षव्यापारमाह — लोहाध्यक्ष इति । लोहाध्यक्षः सुवर्णरूप्ययोर्वक्ष्यमाणत्वात् तदतिरिक्तं ताम्रादिकमिह लोहः तदध्यक्षः, ताम्रसीसत्रपुवैकृन्तकारकूटवृत्तकंसताललोहकर्मान्तान् आरकूटो रीतिः वृत्तं तदाख्यो लोहः कंसो घोषाख्यः तालः कांस्यं सातिशयनादयुक्तं वाद्योपयोगि लोहः कालायसं ताम्रादीनां कर्मान्तान् तद्भाण्डघटनकर्माणि, कारयेत् । लोहभाण्डव्यवहारं च ताम्रादिनिर्मितभाण्डक्रयविक्रयव्यवहारं च कारयेत् ।

अथ पण्यव्यवहारार्थं लक्षणाध्यक्षव्यापारमाह—लक्षणेत्यादि । लक्षणाध्यक्षः लक्षणं पणमाषकादिरूपनिर्माणं तदध्यक्षः टङ्कशालाध्यक्ष इति यावत् । पणव्यवहारश्च रूप्यरूपश्चतुर्विधः ताम्ररूपश्चतुर्विधः इत्यष्टविधे तस्मिन् रूप्यरूपः चतुर्भागताम्रमित्यादिना, ताम्ररूपश्च पादाजीवमित्यादिना व्युत्पाद्यते । षोडशमाषको हि पणः प्रसिद्धः, तस्य चतुर्भागश्चत्वारो माषाः तत्प्रमाणं ताम्रं यस्य तथाविधं, तीक्ष्णत्रपुसीसाञ्जनानामन्यतममाषबीजयुक्तं तीक्ष्णं कालायसं त्रपु रङ्गं सीसं योगेष्टाख्यम् अञ्जनं रसाञ्जनम् एषां चतुर्णामन्यतमस्य माषप्रमाणेन बीजेन निर्माणार्थेन युक्तम्, अर्थात् परिशिष्टैकादशमाषपरिमाणरूप्यकं, रूप्यरूपं रूप्यांशभूम्ना रूप्यमयं, पणं पणसंज्ञं नाणकविशेषं, कारयेत् । इति उक्तेन प्रकारेण, अर्धपणं पादम् अष्टभागं

**पादाजीवं ताम्ररूपं माषकमर्धमाषकं काकणीमर्धकाकणीमिति ।**

**रूपदर्शकः पणयात्रां व्यवहारिकीं कोशप्रवेश्यां च स्थापयेत् । रूपिकमष्टकं शतं, पञ्चकं शतं व्याजीं, पारीक्षिकमष्टभागिकं शतम् । पञ्चविंशतिपणमत्ययं चान्यत्र कर्तृक्रेतृविक्रेतृपरीक्षितृभ्यः ।**

---

कारयेत् पणोक्तताम्राद्यर्धप्रमाणयोगेनार्धपणाख्यं तच्चतुर्भागप्रमाणयोगेन पादपणं तदष्टभागप्रमाणयोगेनाष्टभागाख्यं च निर्मापयेदित्यर्थः । प्रकारान्तरार्थो वा इतिशब्दः इति कारयेदिति योज्यः, त्रिपादकादिकं प्रकारान्तरमपि व्यवहारानुगुणं निर्मापयेदित्यर्थः । पादाजीवं रूप्यरूपचतुर्भागव्यवहार्यं, ताम्ररूपं ताम्रांशभूम्ना ताम्रमयं रूपं, माषकं माषकाख्यं कारयेत् । ताम्रस्यैकादश धान्यमाषाः रूप्यस्य चत्वारस्तीक्ष्णाद्यन्यतमस्यैक इति योगप्रमाणेन रूप्यरूपपणवत् षोडशधान्यमाषप्रमाणकोऽयं ताम्ररूपमाषको द्रष्टव्यः । एवं माषकोक्तताम्राद्यर्धप्रमाणयोगेनार्धमाषकं तच्चतुर्भागप्रमाणयोगेन काकणीं, तदष्टभागप्रमाणयोगेनार्धकाकणीं च कारयेत् ।

**रूपदर्शक** इति । रूपदर्शकः रूपपरीक्षकः, पणयात्रां पणदानादानप्रस्थानं, व्यवहारिकीं व्यवहारप्रयोजनां, कोशप्रवेश्यां च कोशप्रवेशनयोग्यां च, स्थापयेद् ईदृशी पणयात्रा व्यवहारार्था ईदृशी कोशप्रवेशनार्थेति तत्सारासारभावपर्यालोचनया व्यवस्थापयेत् । इयं राजकर्तृका पणयात्रा । जानपदकारितायां तस्यां राजभाव्यमाह — **रूपिकमित्यादि** । अष्टास्योपदा दीयते अष्टकं पञ्चास्योपदा दीयते पञ्चकम् । अष्टकं शतं पणशतेऽष्टपणग्रहणं रूपिकसंज्ञं, पणशते पञ्चपणग्रहणं व्याजीसंज्ञं, पणशतेऽष्टभागग्रहणं पारीक्षिकसंज्ञम् । रूपिकं व्याजीं पारीक्षिकं च यथोक्तलक्षणं स्थापयेद् व्यवस्थापयेत् । तत्र रूपिकं कर्मकरभृतिः, व्याजी राजभागः, पारीक्षिकं परीक्षकभृतिरिति बोद्धव्यम् । पञ्चविंशतिपणम्, अत्ययं च दण्डं च स्थापयेद्, अर्थादपराधे सति । स चापराधः सन्निहिताष्टभागिकपदानुकर्षणेनाष्टभागभवं दण्डमिति व्याख्यानादष्टभागापहारलक्षणो द्रष्टव्यः । अनया दिशा चतुर्भागाद्यपहारे दण्डद्वैगुण्यादिकमुन्नेयम् । केष्वपराधिषु विषयेऽयं दण्ड इत्याकाङ्क्षायामाह — **अन्यत्र कर्तृक्रेतृविक्रेतृपरीक्षितृभ्य** इति । ये करणक्रयणादावधिकृतास्तदतिरिक्तेषु विषये । ते च जानपदा अध्यक्षपुरुषकर्मकरा वेत्यवसेयम् । अन्यत्रकर्त्रादीनां त्वपराधे द्रव्यसारासारतापेक्षो दण्डः **प्रागुक्त एव** ।

**खन्यध्यक्षः शङ्खवज्रमणिमुक्ताप्रवालक्षारकर्मान्तान् कारयेत् पणनव्यवहारं च ।**

**लवणाध्यक्षः पाकमुक्तं लवणभागं प्रक्रयं च यथाकालं सङ्गृह्णीयाद्, विक्रयाच्च मूल्यं रूपं व्याजीं च ।**

**आगन्तुलवणं षड्भागं दद्यात् । दत्तभागविभागस्य विक्रयः । पञ्चकं शतं व्याजीं, रूपं, रूपिकं च । क्रेता शुल्कं, राजपण्यच्छेदानु-**

---

भट्टस्वामी त्वाह — 'तेषां खन्यत्रकर्त्रादीनामुक्त एव दण्डः "कूटकुरूपकं कुर्वतः कारयतो निपातयतो वा सहस्रदण्ड" इति' इति। ईदृशं मूलवाक्यं मृग्यम् ।

अथ खन्यध्यक्षव्यापारमाह — **खन्यध्यक्ष** इत्यादि । खन्यध्यक्षः स्वर्णरत्नाद्याकराधिकारी, शङ्खवज्रमणिमुक्ताप्रवालक्षारकर्मान्तान् शङ्खानां कर्मान्तान् पाटनघर्षणादिक्रियाः वज्रमणिमुक्ताप्रवालानां कर्मान्तान् खननशोधनरञ्जनादिक्रियाः क्षाराणां कर्मान्तान् यवक्षारादीनाम् उत्पादनादिक्रियाश्च, कारयेत् । पणनव्यवहारं च शङ्खादिक्रयविक्रयव्यवहारं च कारयेत् ।

लवणाध्यक्षव्यापारमाह—**लवणे**त्यादि । लवणाध्यक्षः, पाकमुक्तं परिणतं निष्पन्नं, लवणभागं भागार्पिताकरलभ्यं लवणस्य भागं, प्रक्रयं च प्रक्रयः परिपणः अमुकाकरस्यैतावल्लवणं देयमिति परिभाष्यार्पितादाकराल्लभ्यं चेत्यर्थः, यथाकालं क्लृप्तकालानतिक्रमेण, संगृह्णीयात् । तदिदं राजपण्यं वणिग्भिर्विक्रेतव्यम् । **विक्रयाच्चे**ति । विक्रयाच्च तद्विक्रयलब्धद्रव्याच्च, मूल्यं पण्यमूल्यं, रूपं पारीक्षिकमष्टभागिकलक्षणं, व्याजीं च पुनर्मीयमानोनतापरिहारार्थमधिकतया गृह्यमाणां मानव्याजीं च, संगृह्णीयादिति वर्तते ।

इत्थं राजपण्यसम्बद्धमभिधायागन्तुकपण्यसम्बद्धमाह— **आगन्तुलवणमि**ति । आगन्तुलवणं परदेशागतं लवणम्, अर्थात् तद्विक्रेता, षड्भागं दद्यात् षष्ठं भागं राज्ञे दद्यात् । दत्तभागविभागस्य दत्तो राज्ञेऽर्पितः भागः षड्भागो विभागो मानव्याजी च येन तस्यागन्तुलवणव्यवहारिणः, विक्रयो भवति । विक्रये इति सप्तम्यन्तपाठस्तु श्रेयान् उत्तरग्रन्थेनैकवाक्यत्वस्य स्वरसतो लाभात् । न केवलं षड्भाग-मानव्याज्योर्द्वयोरेव दानं, किन्त्वन्येषामपि त्रयाणां तद् भवतीत्याह — **पञ्चकमि**त्यादि । पणशते पणपञ्चकलक्षणां व्याजीं, पारीक्षिकं शतस्याष्टभागिकलक्षणं रूपशब्दवाच्यं, पणशते पणाष्टक-

**रूपं च वैधरणं दद्यात् । अन्यत्रक्रेता षट्छतमत्ययं च ।**

**विलवणमुत्तमं दण्डं दद्यात्, अनिसृष्टोपजीवी च अन्यत्र वानप्रस्थेभ्यः । श्रोत्रियास्तपस्विनो विष्टयश्च भक्तलवणं हरेयुः ।**

**अतोऽन्यो लवणक्षारवर्गः शुल्कं दद्यात् ।**

**एवं मूल्यं विभागं च व्याजीं परिघमत्ययम् ।**
**शुल्कं वैधरणं दण्डं रूपं रूपिकमेव च ॥**
**खनिभ्यो द्वादशविधं धातुं पण्यं च संहरेत् ।**
**एवं सर्वेषु पण्येषु स्थापयेन्मुखसङ्ग्रहम् ॥**

---

लक्षणं रूपिकसंज्ञं च, दद्यादित्यनुषज्यते । **क्रेतेति** । क्रेता शुल्कं दद्यात्, नतु विक्रेता । राजपण्यच्छेदानुरूपं राजपण्याद् विक्रीयमाणाद् यश्छेदः यावन्नष्टं तदनुरूपं, वैधरणं वैधरणशब्दितं छिन्नपूरणं च दद्यात् । अन्यत्र-क्रेता विद्यमाने राजपण्येऽन्यतो लवणं क्रीणानः, षट्छतम् , अत्ययं च दण्डं च, दद्यात् ।

**विलवणमिति** । विलवणं विड(कृतकलवण)मृदादिमिश्रं लवणम्, अर्थात् तथाविधलवणव्यवहर्ता, उत्तमं दण्डम् उत्तमसाहसं, दद्यात् । अनिसृष्टोपजीवी च यो राजाननुमत एव लवणमुत्पाद्योपजीवति स च, उत्तमं दण्डं दद्यात् । तत्रापवादमाह — वानप्रस्थेभ्योऽन्यत्र वानप्रस्थान् विहाय । तेषां त्वनिसृष्टोपजीविनां न दण्ड इत्यर्थः । **श्रोत्रिया इति** । श्रोत्रियाः वेदाध्यायिनः, तपस्विनः दीनाः, विष्टयः हठकारितकर्मकारिणश्च, भक्तलवणम् अन्नाभ्यवहारमात्रपर्याप्तं लवणं, हरेयुः विनैव शुल्कं नयेयुः ।

**अत इति** । अतोऽन्यः उक्तादितरः, लवणक्षारवर्गः 'सैन्धव-सामुद्र-विड-यवक्षार-सौवर्चलोद्भिदजा लवणवर्गः' इति 'फाणित-गुड-मत्स्यण्डिका-खण्ड-शर्कराः क्षारवर्गः' इति च कोष्ठागाराध्यक्षे वक्ष्यमाणो लवणवर्गः क्षारवर्गश्च, अर्थात् तत्कर्ता, शुल्कं दद्यात् शुल्कमेव दद्यान्न तु व्याज्यादिकमित्यर्थः ।

अथ श्लोकानाह — **एवमित्यादि** । एवम् उक्तप्रकारेण, खनिभ्यः, मूल्यं प्रतीतं, विभागं षड्भागं, व्याजीं पञ्चकं शतं मानव्याजीत्युभयविधां, परिघं पारीक्षिकं धातुसमुत्थितानां तज्जातकर्मान्तेषु प्रयोगात् सिद्धं लाभविशेषं वा, अत्ययम् आश्रावितं दमं, शुल्कं प्रतीतं, वैधरणं छिन्नपूरणं, दण्डम्

आकरप्रभवः कोशः कोशाद् दण्डः प्रजायते ।
पृथिवी कोशदण्डाभ्यां प्राप्यते कोशभूषणा ॥

इति कौटलीयार्थशास्त्रे अध्यक्षप्रचारे द्वितीयाधिकरणे
द्वादशोऽध्यायः आकरकर्मान्तप्रवर्तनम्,
आदितः त्रयस्त्रिंशः ॥

---

अश्रावितं दत्तं, रूपं रूप्यरूपं ताम्ररूपमिति द्विविधं, रूपिकम् अष्टकं शतं, धातुं सुवर्णरूप्यादिधातुं, पण्यं विक्रेयं च, द्वादशविधम् उक्तद्वादशप्रकारम् उपादानं, संहरेत् समुत्पादयेत् । एवं, सर्वेषु पण्येषु पणनयोग्येषु मध्ये, मुखसंग्रहं मुखमिव मुखं प्रधानं सारस्तस्य संग्रहं, स्थापयेत् ॥

आकरस्य सर्वार्थसाधकतामध्यायान्तिमश्लोकेन दर्शयति — आकरेत्यादिना ॥

इति कौटलीयार्थशास्त्रव्याख्यायाम् अध्यक्षप्रचारे द्वितीयाधिकरणे
द्वादशोऽध्यायः आकरकर्मान्तप्रवर्तनम्,
आदितस्त्रयस्त्रिंशः॥

---

## ३१. प्रक. अक्षशालायां सुवर्णाध्यक्षः ।

**सुवर्णाध्यक्षः सुवर्णरजतकर्मान्तानामसम्बन्धावेशनचतुश्शाला-मेकद्वारामक्षशालां कारयेत् । विशिखामध्ये सौवर्णिकं शिल्पवन्तमभि-जातं प्रात्ययिकं च स्थापयेत् ।**

**जाम्बूनदं शातकुम्भं हाटकं वैणवं शृङ्गिशुक्तिजं, जातरूपं रस-विद्धमाकरोद्गतं च सुवर्णम् ।**

---

**अक्षशालायां सुवर्णाध्यक्ष** इति सूत्रम् । अक्षशालायां सुवर्णरूप्या-दिनिर्माणशालायां, नियुक्तः सुवर्णाध्यक्षः अर्थात् तस्य व्यापार इहाभिधीयत इति तदर्थः । प्रक्रान्तायां कोशप्रकृतौ प्रधानभूतस्य सुवर्णादेरुत्पत्तिः समनन्त-राध्याययोरुक्ता । तस्यावस्थान-जाति-वर्ण-गुणशोधन-दोषपरीक्षण-परिकर्मा-दिकथनपूर्वमर्जनं रक्षणं चेदानीमभिधीयते ।

**सुवर्णाध्यक्ष** इति । सुवर्णाध्यक्षः, सुवर्णरजतकर्मान्तानां सुवर्ण-रजतसम्बद्धानामलङ्कारादिघटनक्रियाणाम्, अक्षशालाम् अवस्थानभूतां शालां, कारयेत् । सुवर्णादिपरिकर्मस्थानमक्षशालेत्यभिधीयते । तां कीदृशीम्, अस-म्बन्धावेशनचतुश्शालाम् असम्बन्धानि परस्परानुपश्लिष्टानि आवेशनानि शि-ल्पकर्मस्थानभूतानि चतुश्शालानि पृथक् पृथक् चतस्रश्चतस्रः शाला यस्यां ताम् । असम्बाधावेशनेति पाठेऽप्ययमेवार्थः । एकद्वारां रक्षासौकर्यार्थं द्वारेणैकेन युक्तां च । विशिखामध्ये रथ्यामध्ये, सौवर्णिकं पौरजानपदानां रूप्यसुवर्णक्रय-विक्रयकर्माधिकारिणं, स्थापयेत् । कथम्भूतं, शिल्पवन्तं क्षेपणादिवक्ष्यमाण-कर्मनिपुणम्, अभिजातं कुलीनं, प्रात्ययिकम् उपधाशुद्धम् । चकाराज्जानपद-त्वादिगुणयुक्तम् । सौवर्णिकस्य व्यापारः सौवर्णिकप्रचारे वक्ष्यते । तस्यात्र निर्देशः सुवर्णाध्यक्षाधीनत्वज्ञापनाय राजधनपौरजानपदधनानां रक्षाविधान-तुल्यत्वज्ञापनाय च ।

अथ पञ्चविधं पञ्चवर्णं त्रियोनिं सुवर्णमाह — **जाम्बूनदमिति** । सुवर्णं, जाम्बूनदं मेरुप्रभवजम्बूनदीसमुद्भूतं जम्बूफलरसवर्णं, शातकुम्भं शत-कुम्भपर्वतोत्पन्नं पद्मकिञ्जल्कवर्णं, हाटकं हाटकाकरोत्पन्नम् अम्लानाख्यकुर-ण्डककुसुमसवर्णं, वैणवं वेणुपर्वतजं कर्णिकारपुष्पवर्णं, शृङ्गिशुक्तिजं सुवर्ण-भूमिजमिति भाषाटीका, तच्च मनश्शिलावर्णम् । इति पञ्चप्रकारस्य पञ्च-वर्णस्य सुवर्णस्य त्रिविधामुत्पत्तिमाह — **जातरूपमिति** । जातरूपं स्वतः

किञ्जल्कवर्णं मृदु स्निग्धमनादि भ्राजिष्णु च श्रेष्ठं, रक्तपीतकं मध्यमं, रक्तमवरं श्रेष्ठानाम्।

पाण्डु श्वेतं चाप्राप्तकम्। तद् येनाप्राप्तकं तच्चतुर्गुणेन सीसेन शोधयेत्, सीसान्वयेन भिद्यमानं शुष्कपटलैर्ध्मापयेत्, रूक्षत्वाद् भिद्यमानं तैलगोमये निषेचयेत्।

आकरोद्गतं सीसान्वयेन भिद्यमानं पाकपत्राणि कृत्वा गण्डिकासु कुट्टयेत्, कन्दलीवज्रकन्दकल्के वा निषेचयेत्।

तुत्थोद्गतं गौडिकं काम्बुकं चाक्रवालिकं च रूप्यम्। श्वेतं

---

सुवर्णमेवोत्पन्नं, रसविद्धं रसयोगेन काञ्चनीकृतम्, आकरोद्गतं च आकरगतमृत्पाषाणादिभ्यः पातितं च। क्रियावादोत्पन्नमित्यपि केचित्। तत्पक्षे चतुर्योनित्वं बोध्यम्। अत्रायं भट्टस्वामिनः श्लोकः—

"हेम्नः पञ्चप्रकारस्य त्रियोनेः पञ्च वर्णकाः।
जम्बूकोकनदाम्लानकर्णिकारमनश्शिलाः॥" इति।

गुणानाह— **किञ्जल्केत्यादि**। किञ्जल्कवर्णं, मृदु तप्तमतप्तं चारूक्षं, स्निग्धम् अखरम्, अनादि नादरहितम्, अनुनादीति पाठे दीर्घनादं, भ्राजिष्णु भास्वरं च, सुवर्णं श्रेष्ठम् उत्तमोत्तमं भवति। रक्तपीतकं लोहितहारिद्रवर्णं मध्यमं श्रेष्ठानामेव मध्ये भवति। रक्तम् अवरम् उत्तमाधमं भवति।

अथ शोधनप्रकारमाह—**पाण्डुश्वेतमिति**। पाण्डु हरिणवर्णं, श्वेतं सितं च, अप्राप्तकं तत्संज्ञं द्रव्यान्तरयोगेनोत्तमवर्णतामप्राप्तमिति कृत्वा। तत् तथाविधं स्वर्णं, येनाऽप्राप्तकं येनापद्रव्येणाशुद्धतां गतं, तच्चतुर्गुणेन सीसेन, शोधयेद् आवर्तयेद् आ सीसक्षयात्। सीसान्वयेन सीसानुवेधेन, भिद्यमानं वियुज्यमानं, शुष्कपटलैः शुष्कारण्यगोमयैः, ध्मापयेत्। रूक्षत्वाद् भिद्यमानं, तैलगोमये तैले गोमये च, निषेचयेत् पुनःपुनरावर्त्य प्रक्षिपेत्।

आकरोद्गतस्य शोधने विशेषमाह—**आकरोद्गतमिति**। आकरोद्गतं सुवर्णं, सीसान्वयेन भिद्यमानं, पाकपत्राणि कृशपत्राणि, कृत्वा, गण्डिकासु काष्ठफलकेषु, कुट्टयेत् अर्थात् काष्ठेन। अथवा, कन्दलीवज्रकन्दकल्के कन्दली वल्लिभेदः वज्रं श्रीबेरं कन्दं पद्ममूलम् एतद्योगसिद्धे कषाये, निषेचयेत्।

रूप्यं चतुर्विधमाह—**तुत्थोद्गतमिति**। तुत्थोद्गतं तुत्थपर्वतजं जातिकुसुमाभं, गौडिकं कामरूपजं तगरकुसुमवर्णं, काम्बुकं कम्बुपर्वतोत्पन्नं, चाक्रवालिकं चक्रवालाकरोद्भूतं तदुभयं कुन्दपुष्पाभम् इति चतुर्धा रूप्यं श्रेष्ठम्।

**स्निग्धं मृदु च श्रेष्ठम् । विपर्यये स्फोटनं च दुष्टम् । तत् सीसचतुर्भागेन शोधयेत् ।**

**उद्गतचूलिकमच्छं भ्राजिष्णु दधिवर्णं च शुद्धम् ।**

**शुद्धस्यैको हारिद्रस्य सुवर्णो वर्णकः । ततः शुल्बकाकण्युत्तरापसारिता आ चतुस्सीमान्तादिति षोडश वर्णकाः ।**

**सुवर्णं पूर्वं निकष्य पश्चाद् वर्णिकां निकषयेत् । समरागलेखमनि-**

---

तस्य श्वैत्यं स्निग्धत्वं मार्दवमिति त्रीन् गुणानाह— **श्वेतमित्यादि** । दोषानाह— **विपर्यय इति** । विपर्यये दुष्टम् उक्तगुणवैपरीत्ये दोषाः कृष्णत्वरूक्षत्वखरत्वरूपाः, स्फोटनं च दुष्टं भिद्यमानत्वं च दोष इत्याहत्य चत्वारो दोषाः । शुद्धिमाह— तद् दुष्टं रजतं, सीसचतुर्भागेन रजतप्रमाणचतुर्भागेन सीसेन, शोधयेत् ।

शुद्धस्य लक्षणमाह — **उद्गतचूलिकमित्यादि** । उत्थितबुद्बुदं, स्वच्छं, रुचिमत्, दधिप्रभं च शुद्धम् ।

अथ शुद्धसुवर्णस्य षोडश वर्णकानाह— **शुद्धस्येति** । शुद्धस्य स्वभावशुद्धस्य यथोक्तविधिशोधितस्य वा, हारिद्रस्य हरिद्राभङ्गभासुरस्य सुवर्णस्य, सुवर्णः षोडशमाषप्रमाणः एको वर्णकः शुद्धो भवति । ततः तस्मिन् वर्णके, शुल्बकाकणी शुल्बस्य ताम्रस्य काकणी माषचतुर्भागः, प्रक्षिप्तेति शेषः, उत्तरा अधिका सुवर्णकाकणी, अपसारिता तस्माद् वर्णकाद् अपनीता च, भवति । आ कुतः इमे काकणीप्रक्षेपापसारणे इत्यत्राह — आ चतुस्सीमान्तात् आ चतुर्माषावधेः आ षोडशकाकण्यवधेरित्यर्थः । इति एकादिषोडशान्तानां शुल्बकाकणीनां वर्णके मिश्रणं स्वर्णकाकणीनां वर्णकादपनयनं चेत्यनया रीत्या, षोडश वर्णकाः, मिश्राः सम्पद्यन्त इति शेषः । त एते शुद्धवर्णकेन सह सप्तदश भवन्ति । इह चतुरित्यनेन काकणीग्रहणे वर्णकषोडशत्वासिद्ध्या तत्सिद्धये षोडशपर्यन्तकाकण्यपेक्षणात् सामर्थ्याच्चतुर्माषग्रहणं विज्ञेयम् ।

निकषच्छेदतापलक्षणां त्रिविधां वर्णकपरीक्षामाह — **सुवर्णमिति** । सुवर्णं परीक्ष्यं, पूर्वं प्रथमं, निकष्य निकषे घर्षणेन दत्तरेखं कृत्वा, पश्चाद्, वर्णिकां, तद्वर्णकपरीक्षार्थं निकषयेत् । निरुपाधिकं निकषितमाह— **समरागेत्यादि** । समरागलेखं तुल्यरागया रेखया युक्तम्, अनिम्नोन्नते देशे निकषो-

म्नोन्नते देशे निकषितम्। परिमृदितं परिलीढं नखान्तराद्वा गैरिकेणावचूर्णितमुपधिं विद्यात्। जातिहिङ्गुलकेन पुष्पकासीसेन वा गोमूत्रभावितेन दिग्धेनाग्रहस्तेन संस्पृष्टं सुवर्णं श्वेतीभवति।

सकेसरः स्निग्धो मृदुर्भ्राजिष्णुश्च निकषरागः श्रेष्ठः।

कालिङ्गकस्तापीपाषाणो वा मुद्गवर्णो निकषः श्रेष्ठः। समरागी विक्रयक्रयहितः। हस्तिच्छविकः सहरितः प्रतिरागी विक्रयहितः। स्थिरः परुषो विषमवर्णश्चाप्रतिरागी क्रयहितः।

छेदश्चिक्कणः समवर्णः श्लक्ष्णो मृदुर्भ्राजिष्णुश्च श्रेष्ठः।

---

पलप्रदेशे, निकषितं, न्याय्यं भवतीति शेषः। व्याजनिकषितमाह— **परिमृदितमित्यादि**। परिमृदितं गाढनिकषितं वर्णकोत्कर्षार्थं विक्रेता करोति। परिलीढम् अगाढनिकषितं वर्णापकर्षार्थं क्रेता करोति, हस्तेनोन्मृष्टलीढमिति स्वामी। नखान्तराद् गैरिकेण नखान्तरनिहितेन पीतधातुना, अवचूर्णितं प्रक्षिप्तचूर्णम् उत्कर्षार्थं विक्रेता तत्पक्ष्यो वा परीक्षकः करोति। इति त्रिविधम् उपधिं विद्यात्। उपाधिमन्यमाह— **जातीत्यादि**। गोमूत्रभावितेन जातिहिङ्गुलकेन हंसपादाख्यहिङ्गुलकविशेषेण, पुष्पकासीसेन वा किञ्चित्पीतवर्णेन हरितालेन वा, दिग्धेन लिप्तेन, अग्रहस्तेन, संस्पृष्टं, सुवर्णं, श्वेतीभवति हीनवर्णं भवति। अयं क्रेतृप्रयोज्यो व्याजः।

गुणानाह — **सकेसर इति**। सकेसरः बहुलकेसरः, स्निग्धो, मृदुः भ्राजिष्णुश्च, निकषरागः निकषरेखावर्णः, श्रेष्ठः।

निकषगुणमाह — **कालिङ्गक इति**। कालिङ्गकः कलिङ्गदेशे महेन्द्रपर्वतादुत्पन्नः पाषाणः, तापीपाषाणो वा, तापी नाम आरट्टदेशवाहिनी नदी तद्गतः पाषाणो वा, मुद्गवर्णो निकषः श्रेष्ठः। समरागी यथास्थितवर्णग्राही, विक्रयक्रयहितः क्रेतृविक्रेत्रोरुभयोरप्यनुकूलः। हस्तिच्छविकः गजचर्मवत् खरशुष्कः, सहरितः हरितवर्णयुक्तः, प्रतिरागी अपकृष्टस्यापि सुवर्णस्य रागोत्कर्षप्रदर्शकः, विक्रयहितः विक्रेतुरनुकूलः। स्थिरः दृढः, परुषः खरः, विषमवर्णः नानावर्णश्च, अप्रतिरागी उत्कृष्टस्यापि सुवर्णस्य यथास्थितरागाप्रदर्शकः निकषः, क्रयहितः क्रेतुरनुकूलः।

निकषमुक्त्वा छेदमाह — **छेद इति**। छेदः छिन्नः स्वर्णखण्डः। चिक्कणः स्निग्धः, समवर्णः बहिरन्तश्च तुल्यवर्णः, श्लक्ष्णः मसृणः, मृदुः भ्राजिष्णुश्च श्रेष्ठः।

तापे बहिरन्तश्च समः किञ्जल्कवर्णः कुरण्डकपुष्पवर्णो वा श्रेष्ठः। श्यावो नीलश्चाप्राप्तकः।

तुलाप्रतिमानं पौतवाध्यक्षे वक्ष्यामः। तेनोपदेशेन रूप्यसुवर्णं दद्यादाददीत च।

अक्षशालामनायुक्तो नोपगच्छेत्। अभिगच्छन् उच्छेद्यः। आयुक्तो वा सरूप्यस्वर्णस्तेनैव जीयेत। विचितवस्त्रहस्तगुह्याः काञ्चनपृषतत्वष्टृतपनीयकारवो ध्मायकचरकपांसुधावकाः प्रविशेयुर्निष्कसेयुश्च। सर्वं चैषामुपकरणमनिष्ठिताश्च प्रयोगास्तत्रैवावातिष्ठेरन्। गृहीतं सुवर्णं धृतं च प्रयोगं करणमध्ये दद्यात्। सायं प्रातश्च लक्षितं कर्तृकारयितृमुद्राभ्यां निदध्यात्।

---

अथ तापमाह—ताप इति। अग्नितापितः स्वर्णभागः, बहिरन्तश्च समः समानवर्णः, तापनात् पूर्वं पश्चाच्च किञ्जल्कवर्णः, कुरण्डकपुष्पवर्णो वा अम्लानकुसुमवर्णो वा, श्रेष्ठः। श्यावः कपिशः, नीलश्च, अप्राप्तकः तत्संज्ञः अशुद्ध इति यावत्।

अथ रूप्यसुवर्णयोरुन्मानविध्यपेक्षायामाह—तुलेत्यादि। तुलाप्रतिमानं तुलापरिच्छेदविधिं, पौतवाध्यक्षे तुलामानपौतवप्रकरणे, वक्ष्यामः। इयमनागतावेक्षणरूपा तन्त्रयुक्तिः। तेनोपदेशेन तत्प्रकरणोक्तमानविधिना, रूप्यसुवर्णं, दद्याद्, आददीत च गृह्णीयाच्च।

पालनविधिमाह— अक्षशालामिति। अक्षशालाम्, अनायुक्तः अनधिकृतः, नोपगच्छेत्। अभिगच्छन् वारितोऽप्यभिमुखं गच्छन्, उच्छेद्यः हृतसर्वस्वः कर्तव्यः। आयुक्तो वा नियुक्तोऽपि वा, सरूप्यस्वर्णः रूप्यस्वर्णसहितो, गच्छन्, तेनैव रूप्येण स्वर्णेन च, जीयेत दण्ड्येत। विचितेत्यादि। विचितवस्त्रहस्तगुह्याः वस्त्रं हस्तौ गुह्यं च विचितं रूप्यस्वर्णयुक्तं न वेति परीक्षितं येषां ते तथाविधाः भूत्वा, काञ्चनपृषतत्वष्टृतपनीयकारवः काञ्चनकारवः रसवेधस्वर्णीकरणशिल्पिनः पृषतकारवो गुलिकादिसूक्ष्मशिल्पकारिणः त्वष्टृकारवः पट्टपात्रादिशिल्पिनः तपनीयकारवः नानाजातीयभूषणशिल्पिनश्च, ध्मायकचरकपांसुधावकाः भस्त्राध्मायकाः परिचारकाः धूलिशोधकाश्च, प्रविशेयुः अक्षशालां, निष्कसेयुश्च ततो निर्गच्छेयुश्च। सर्वं चेति। एषां कारुप्रभृतीनां, सर्वम् उपकरणम्, अनिष्ठिताः प्रयोगाश्च असमाप्तानि शिल्पानि च, तत्रैव अवतिष्ठेरन् अक्षशालातो बहिर्न नीयेरन्। गृहीतमिति। गृहीतं भाण्डागाराद्

**क्षेपणो गुणः क्षुद्रकमिति कर्माणि । क्षेपणः काचार्पणादीनि । गुणः सूत्रवानादीनि । घनं सुषिरं पृषतादियुक्तं क्षुद्रकमिति ।**

**अर्पयेत् काचकर्मणः पञ्चभागं काञ्चनं दशभागं कटुमानम् । ताम्रपादयुक्तं रूप्यं रूप्यपादयुक्तं वा सुवर्णं संस्कृतकं तस्माद् रक्षेत् ।**

**पृषतकाचकर्मणः त्रयो हि भागाः परिभाण्डं द्वौ वास्तुकम् । चत्वारो वा वास्तुकं त्रयः परिभाण्डम् ।**

---

आत्मनोपात्तं सुवर्णं, प्रयोगं च यत्र सुवर्णं प्रयुक्तं तं पदार्थं च, करणमध्ये धृतं दद्यात् करणानां राजलेखकानां स्वस्वपुस्तकेष्वर्थं लिखतां साक्षिभूतानां मध्ये तुलाधृतं कृत्वा प्रत्यर्पयेत्, अर्थात् सुवर्णाध्यक्षः । सायं प्रातश्च दैनन्दिनव्यापारस्यावसाने प्रारम्भे च, कर्तृकारयितृमुद्राभ्यां लक्षितं कर्तृकारयित्रोः सौवर्णिकसुवर्णाध्यक्षयोर्मुद्राभ्यां चिह्नितं, स्थापयेत्, सुवर्णम् । करणमध्य इत्येव ।

अथ कर्म त्रिधा विभज्य व्याचष्टे—**क्षेपण** इत्यादि । क्षेपणः तदाख्यं कर्म, काचार्पणादीनि मणिसंयोजनादीनि । गुणः तत्कर्म, सूत्रवानादीनि कटिसूत्रग्रथनादीनि । क्षुद्रकं सूक्ष्मपरिकर्म, घनं कटकाङ्गुलीयकादि सुषिरं सरन्ध्रं स्थालभिङ्गारादि, पृषतादियुक्तं पृषतो गुटिका आदिपदात् पत्रभङ्गादि तद्युक्तम् । इतिशब्दः प्रकारान्तरसंग्रहार्थः ।

**अर्पयेदिति** । काचकर्मणः मणिसंयोजनस्य विधिरुच्यत इति वाक्यशेषः । पञ्चभागं मणेः पञ्चमं भागं तलभागं काञ्चनम् अर्पयेद् आधारसुवर्णे प्रवेशयेत् । दशभागं काञ्चनप्रवेशितस्य भागस्यार्धं, कटुमानम् अर्पयेत् मणिदार्ढ्यार्थो वास्तुकोपरिसुवर्णपट्टिकाबन्धः कटुमानमित्युच्यते । तत्र प्रवेशयेदित्यर्थः । रत्नार्पणाधारबन्धे रूप्यमये ताम्रपादयोजनेन तावद्रूप्यहरणं, सुवर्णमये रूप्यपादयोजनेन तावत्सुवर्णहरणं च पश्यतोहरैः सुकरं यतः, तस्मात् कारणाद् आधारबन्धो द्रव्यान्तरमिश्रणाद् यत्नेन रक्षणीय इत्युपदिशति—**ताम्रपादे**त्यादि । संस्कृतकं, यथोक्तमिश्रणाशुद्धमपि रूप्यं सुवर्णं वा शुद्धसदृशं प्रतिभायादित्यर्थः ।

शुद्धकाचकर्मविधिमुक्त्वा मिश्रकाचकर्मविधिमाह—**पृषते**त्यादि । पृषतकाचकर्मणः गुटिकामिश्रकाचकर्मणि क्रियमाणे, तदर्थं सुवर्णं पञ्चधा विभज्य त्रयो भागाः, परिभाण्डं पद्मस्वस्तिकाद्याकारं पृषतमणिप्रतिवापस्थानं भवति, द्वौ वास्तुकं द्वौ भागौ आधारपीठबन्धः । इत्येकः प्रकारः । यदि मणयः स्थूलास्तदा विधिमाह—**चत्वारो** वेत्यादि ।

**त्वष्टृकर्मणः। शुल्वभाण्डं समसुवर्णेन संयूहयेत्। रूप्यभाण्डं घनं घनसुषिरं वा सुवर्णार्धेन अवलेपयेत्। चतुर्भागसुवर्णं वालुकाहिङ्गुलकस्य रसेन चूर्णेन वा वासयेत्।**

**तपनीयं ज्येष्ठं सुवर्णं सुरागं, समसीसातिक्रान्तं पाकपत्रपक्वं सैन्धविकयोज्ज्वालितं नीलपीतश्वेतहरितशुकपोतवर्णानां प्रकृतिर्भवति। तीक्ष्णं चास्य मयूरग्रीवाभं श्वेतभङ्गं चिमिचिमायितं पीतचूर्णितं काकणिकः सुवर्णरागः।**

---

त्वष्टृकर्माह— **त्वष्टुरित्यादि**। त्वष्टृकर्मणः ताम्ररजतनिर्मितघनपत्रादिकर्मणः विधिरुच्यत इति शेषः। शुल्बभाण्डं ताम्रभाण्डं, समसुवर्णेन संयूहयेत् ताम्रपलतुल्यपलेन सुवर्णेनं दृढपत्रीकृतेन संयोजयेत्। रूप्यभाण्डं, घनम् अङ्गुलीयककङ्कणादि, घनसुषिरं वा स्थालीकलशभृङ्गारादिकं वा, सुवर्णार्धेन अवलेपयेत् रूप्यपलशतकृतं भाण्डं पञ्चाशता सुवर्णपलैस्तनुपत्रीकृतैरेव श्लेषयेत्। अवलेपविधिमुक्त्वा वासनाविधिमाह— **चतुर्भागसुवर्णमिति**। रूप्यभाण्डमिति वर्तते। अयमर्थः— रूप्यपलशतकृतं भाण्डं पञ्चविंशतिपलसुवर्णेन चूर्णीकृतेन वालुकाहिङ्गुलकचूर्णमिश्रेण पारतयुक्तेन तुषाग्निद्रवीकृतेन वासयेत्। एवं तावत् सुवर्णस्य समस्यार्धस्य चतुर्भागस्य च योजनेन त्रिप्रकारं त्वष्टृकर्म व्युत्पादितम्।

तपनीयकर्माह — **तपनीयमित्यादि**। तपनीयम् अलङ्कारार्थं घटनीयं कनकं, ज्येष्ठम् उत्तमं सप्तदशवर्णकं षोडशवर्णकं वा, सुवर्णं किञ्जल्काद्यन्यतमवर्णं, सुरागं स्निग्धभ्राजिष्णुरागं, नीलपीतादीनां पञ्चानां प्रकृतिः कारणं भवति। अनेवम्भूताशुद्धस्वर्णविषये आह — **समसीसेत्यादिना**। समसीसातिक्रान्तं तत्तुल्यमानसीसशोधितं, पाकपत्रपक्वं तनुपत्रात्मकं कृत्वारण्यगोमयदग्धं, सैन्धविकया सौराष्ट्रमृत्तिकया सह उज्ज्वालितम्, इत्थं शोधनेन संस्कृतं, नीलादीनां प्रकृतिर्भवति। **तीक्ष्णं चेति**। अस्य तपनीयस्य, तीक्ष्णं तदाख्यो लोहविशेषश्च, प्रकृतिर्भवतीत्यनुवर्तते, अर्थान्नीलादीनां पञ्चानाम्। कीदृशं तीक्ष्णं मयूरग्रीवाभं, श्वेतभङ्गं छेदे शुक्लं, चिमिचिमायितम् अत्यन्तभास्वरम्, ईदृशं तीक्ष्णं, पीतचूर्णितं तप्तचूर्णीकृतं स्वर्णे प्रक्षिप्तमित्यार्थम्। कियति स्वर्णे कियत् तीक्ष्णं रञ्जनार्थं प्रक्षेप्तव्यमित्यत्राह — **काकणिक इति**। सुवर्णरागः षोडशमाषप्रमाणस्य सुवर्णस्य रागो रञ्जकस्तीक्ष्णांशः, काकणिकः काकणी माषचतुर्भागस्तत्प्रमाणकः।

तारमुपशुद्धं वा। अस्थितुत्थे चतुः, समसीसे चतुः, शुष्कतुत्थे चतुः, कपाले त्रिर्गोमये द्विः, एवं सप्तदशतुत्थातिक्रान्तं सैन्धविकयोज्ज्वालितम्। एतस्मात् काकण्युत्तरापसारिता। आ द्विमाषादिति सुवर्णे देयं, पश्चाद् रागयोगः। श्वेततारं भवति।

त्रयोंऽशाः तपनीयस्य द्वात्रिंशद्भागश्वेततारमूर्छितं तत् श्वेतलोहितकं भवति। ताम्रं पीतकं करोति।

---

स्वर्णानन्तरं रूप्यमाह — तारमित्यादि। उपशुद्धम् अत्यन्तशुद्धं, तारं रजतं, वाशब्दो विकल्पे। नीलादीनां प्रकृतिर्भवतीत्यनुवर्तते। तारस्याशुद्धस्य शोधनप्रकारमाह—अस्थितुत्थ इति। अस्थितुत्थे अस्थिचूर्णयुक्तमृत्तिकानिर्मितायां मूषायां, चतुः चतुर्वारान्, आवर्तितम्, एवं समसीसे मृत्तिकासीससमप्रमाणनिर्मिते तुत्थे चतुः, शुष्कतुत्थे 'शुष्कतुत्थः कटुशर्करामूषा' इति भट्टस्वामी, तस्यां चतुः, कपाले शुद्धमृत्तिकामूषायां त्रिः, गोमये गोमयकृतमूषायां द्विः, एवं सप्तदशतुत्थातिक्रान्तं सप्तदशमूषावर्तितं, पश्चात्, सैन्धविकया लवणयुक्तसौराष्ट्रमृत्तिकया सह, उज्ज्वालितम् उज्ज्वलनसंस्कृतं, शुद्धमित्यार्थम्। एतस्मात् काकणी उत्तरीत्या शोधिताद् रूप्यात् काकणी, सुवर्णे प्रक्षिप्ता, उत्तरा अपसारिता अधिका सुवर्णकाकणी अपनीता भवति। इति आ द्विमाषात् सुवर्णे देयम् एवं सुवर्णकाकण्यपनयनपूर्वकरूप्यकाकणीप्रक्षेपोपचयक्रमेण अष्टकाकण्यधिकः सुवर्णे रूप्यप्रक्षेपः कर्तव्यः। पश्चाद्, रागयोगः रागयोगार्थो यथोक्ततीक्ष्णकाकणीप्रक्षेपः। श्वेततारं भवति एवं करणे स्वर्णं श्वेततारसमप्रभं संपद्यते। केचित्तु श्वेततारं रागार्थं भवतीति व्याचक्षते।

रागयोगमाह — त्रयोंऽशा इत्यादि। एवं स्वामी व्याचष्टे — सामान्यसुवर्णाद् द्वात्रिंशद्वा विभक्ताद् अंशत्रयमपनीय, तपनीयस्य यथोक्तप्रकारशोधिततपनीयस्य, त्रयोंऽशाः सामान्यस्वर्णे प्रक्षिप्यन्त इति शेषः। तत् स्वर्णं, द्वात्रिंशद्भागश्वेततारमूर्छितं द्वात्रिंशद्भागिकेन श्वेतरजतेन सहावर्तितं सत्, श्वेतलोहितकं भवति श्वेतलोहितात्मकवर्णद्वयसम्भिन्नं भवति। ताम्रं कर्तृ, पीतकं पीतवर्णं करोति, अर्थात् तदेव सामान्यस्वर्णं कर्म। इहापि पूर्ववत् 'त्रयोंऽशा' इत्यादि योजनीयं, श्वेततारस्थाने च ताम्रम्। तथाच तत् स्वर्णं द्वात्रिंशद्भागिकताम्रेण सहावर्तितं सत् पीतवर्णं जायत इत्युक्तं भवति। भाषाटीका त्वन्यथा व्याचष्टे — द्वात्रिंशति भागेषु त्रयोंऽशास्तपनीयस्य, शेषास्तु रजत-

**तपनीयमुज्ज्वाल्य रागत्रिभागं दद्यात् । पीतरागं भवति ।**

**श्वेततारभागौ द्वावेकस्तपनीयस्य मुद्गवर्णं करोति ।**

**कालायसस्यार्धभागाभ्यक्तं कृष्णं भवति । प्रतिलेपिना रसेन द्विगुणाभ्यक्तं तपनीयं शुकपत्रवर्णं भवति । तस्यारम्भे रागविशेषेषु प्रतिवर्णिकां गृह्णीयात् ।**

**तीक्ष्णताम्रसंस्कारं च बुध्येत । तस्माद् वज्रमणिमुक्ताप्रवालरूपाणामपनेयिमानं च रूप्यसुवर्णभाण्डबन्धप्रमाणानि चेति ।**

---

स्येत्येवं मिश्रयित्वावर्तने कृते तच्छ्वेतलोहितवर्णं भवति । एवं द्वात्रिंशद्भागात्मके ताम्रे शुद्धसुवर्णस्य त्रीन् भागान् योजयित्वावर्तने कृते तत् पीतरागं भवतीति ।

**तपनीयमुज्ज्वाल्येति** । तपनीयं सामान्यस्वर्णं, सैन्धविकयोज्ज्वाल्य, रागत्रिभागं शोधितस्वर्णत्रिभागं, दद्यात् । पीतरागं भवति तथाकरणे तत् सामान्यस्वर्णं पीतरागं पीतरक्तं भवति । अपरा व्याख्या—तपनीयं शोधितसुवर्णं सैन्धविकयोज्ज्वाल्य तत्र रागत्रिभागं ताम्रत्रिभागं दद्यात् । तत् पीतरागं भवतीति ।

द्विगुणशुद्धरूप्ययुक्तं शुद्धसुवर्णमावर्तितं मुद्गवर्णं भवतीत्याह—**श्वेततारभागावित्यादि** । पश्चाद्रागयोग इति सर्वशेषो द्रष्टव्यः ।

**कालायसस्येति** । कालायसस्य तीक्ष्णस्य, अर्धभागाभ्यक्तम् अर्धभागेन रागार्थस्य तीक्ष्णस्य प्रमाणं तृतीयांश उक्तः तदर्धभागेन अर्थात् षड्भागेन अभ्यक्तमनुलिप्तं न त्वावर्तितं, तपनीयं, कृष्णम् अञ्जनवर्णं, भवति । प्रतिलेपिना द्रवीकृतेन कालायसेन, रसेन पारतयुक्तेन, द्विगुणाभ्यक्तं द्विगुणमनुलिप्तं, तपनीयं, शुकपत्रवर्णं भवति । **तस्येति** । तस्य नीलादेरुक्तस्य, आरम्भे, रागविशेषेषु शुद्धाशुद्धस्वर्णरजतरूपेषु रञ्जकभेदेषु विषये, प्रतिवर्णिकां तारतम्यपरिच्छेदार्थं, गृह्णीयात् ।

रञ्जनार्थतीक्ष्णताम्रयोः शुद्धिपरिज्ञानापेक्षायामाह—**तीक्ष्णेत्यादि** । तीक्ष्णताम्रयोः संस्कारं शोधनं, बुध्येत धातुशोधनशास्त्राज्जानीयात् । तस्मात् सुवर्णरजतादिशुद्धिप्रकारज्ञानस्य यो हेतुः कारुहरणशङ्कारूपस्तेनैव हेतुनेत्यर्थः, वज्रमणिमुक्ताप्रवालरूपाणाम्, अपनेयिमानं च असारहीरमाणिक्यादिप्रक्षेपेण सारहीरमाणिक्यादिपरिवर्तनादिकं हरणप्रकारं च, रूप्यसुवर्णभाण्डबन्धप्रमा-

समरागं समद्वन्द्वमसक्तपृषतं स्थिरम् ।
सुप्रमृष्टमसंपीतं विभक्तं धारणे सुखम् ॥
अभिनीतं प्रभायुक्तं संस्थानमधुरं समम् ।
मनोनेत्राभिरामं च तपनीयगुणाः स्मृताः ॥

इति कौटलीयार्थशास्त्रे अध्यक्षप्रचारे द्वितीयाधिकरणे
त्रयोदशोऽध्यायः अक्षशालायां सुवर्णाध्यक्षः,
आदितश्चतुस्त्रिंशः ॥

---

णानि च रूप्यसुवर्णाभरणादीनां संव्यूहनादीनि च 'शुल्बभाण्डं समसुवर्णेन संयूहयेत्' इत्यादिनोक्तानि, बुध्येतेति सम्बध्यते । इतिशब्दः प्रकारे ।

अध्यायान्ते श्लोकद्वयं तपनीयगुणचतुर्दशकप्रतिपादकमाह — **समरागमित्यादि** । समरागं समवर्णिकं, समद्वन्द्वं तोलनतो वर्णतश्च स्वसमानद्वितीयम्, असक्तपृषतम् असंसक्तगुटिकं, स्थिरम् अविसंवादि, सुप्रमृष्टं पूर्वोक्तविधिना सैन्धविकया सम्यगुज्ज्वालितम्, अप्रमृष्टमिति पाठे अकृत्रिमच्छायम्, असम्पीतं छायोत्कर्षार्थं पायितं न भवति, विभक्तं सुविभक्तावयवं, धारणे सुखम् आमुञ्चताम् अदुःखकरम्, अभिनीतम् अनुद्धणं, प्रभायुक्तं द्युतिमत्, संस्थानमधुरम् आकृतिरमणीयं, समम् अनिम्नोन्नतप्रदेशं, मनोनेत्राभिरामं मनोहरं दृष्टिसुखं च, तपनीयगुणाः स्वर्णाभरणगुणाः ॥

इति कौटलीयार्थशास्त्रव्याख्यायामध्यक्षप्रचारे द्वितीयाधिकरणे
त्रयोदशोऽध्यायः अक्षशालायां सुवर्णाध्यक्षः,
आदितः चतुस्त्रिंशः ॥

## ३२. प्रक. विशिखायां सौवर्णिकप्रचारः ।

**सौवर्णिकः पौरजानपदानां रूप्यसुवर्णमावेशनिभिः कारयेत् । निर्दिष्टकालकार्यं च कर्म कुर्युः, अनिर्दिष्टकालं कार्यापदेशम् ।**

**कालातिपातने पादहीनं वेतनं तद्द्विगुणश्च दण्डः । कार्यस्यान्यथाकरणे वेतननाशः तद्द्विगुणश्च दण्डः ।**

**यथावर्णप्रमाणं निक्षेपं गृह्णीयुस्तथाविधमेवार्पयेयुः, कालान्तरादपि च तथाविधमेव प्रतिगृह्णीयुरन्यत्र क्षीणपरिशीर्णाभ्याम् ।**

---

**विशिखायां सौवर्णिकप्रचार** इति सूत्रम् । विशिखायां विशिखेह सौवर्णिकविपणिः तस्यां, सौवर्णिकप्रचारः सौवर्णिकस्य सुवर्णे नियुक्तस्य प्रचारो व्यापारः, सोऽभिधीयत इत्यर्थः । पूर्वाध्याये शिल्पवत्त्वाभिजात्यप्रात्ययिकत्वादिगुणयुक्तं विशिखायां सौवर्णिकं कुर्यादित्युक्तम् । तस्य व्यापारस्तु नोक्तः । स इहोच्यत इति सम्बन्धः ।

**सौवर्णिक** इति । सौवर्णिकः, पौरजानपदानां पुरवासिनां बहिर्विषयवासिनां च, रूप्यसुवर्णं रूप्यशिल्पं सुवर्णशिल्पं च, आवेशनिभिः शिल्पिशालीयैः सुवर्णकारादिभिः, कारयेत् । निर्दिष्टकालकार्यं च कर्म कुर्युः इयता कालेनेदृशं कटकाङ्गदादि निर्मायार्पणीयम् एतावच्च वेतनमिति परिभाषणपूर्वं शिल्पं कुर्युः, अर्थादावेशनिनः । कार्यापदेशम् अनिर्दिष्टकालमिति निर्मातव्यवस्तुगौरवनिमित्तं तु अपरिभाषितकालमपि कर्म कुर्युः ।

**कालातिपातन** इति । परिभाषितकालातिक्रमे, पादहीनं परिभाषितचतुर्भागहीनं, वेतनं भवति, तद्द्विगुणः गृह्यमाणवेतनद्विगुणः दण्डश्च भवति । कार्यस्यान्यथाकरणे कटकं परिभाष्य केयूरादिकरणे, वेतननाशः, तद्द्विगुणः नष्टवेतनद्विगुणः, दण्डश्च भवति । कण्टकशोधने कारुकरक्षणे कारूणां सर्वेषां दण्ड उक्तः. सुवर्णकारूणां त्विह दण्डकथन विशेषज्ञापनार्थं — कार्वन्तरदण्डवत् सुवर्णकारुदण्डं प्रशास्तारः केवला न कुर्युः किन्तु सौवर्णिकसहिता एव कुर्युरिति ।

**यथावर्णेत्यादि** । निक्षेपं घटनीयरूप्यसुवर्णादि, यथावर्णप्रमाणं यद्वर्णिकं यत्प्रमाणं च, गृह्णीयुः, तथाविधमेव तत्प्रकारमेव न तु लेशतोऽपि वर्णप्रमाणयोर्हीनम्, अर्पयेयुः कारवः । कालान्तरादपि चेति ग्रहीतुः कारुकस्य दीर्घप्रवासादिना मरणादिना वा निमित्तेन तत्पुत्रादिहस्तादपि च, तथाविधमेव

**आवेशनिभिः सुवर्णपुद्गललक्षणप्रयोगेषु तत्तज्जानीयात् ।**

**तप्तकलधौतकयोः काकणिकः सुवर्णे क्षयो देयः । तीक्ष्णकाकणी रूप्यद्विगुणा रागप्रक्षेपस्तस्य षड्भागः क्षयः ।**

**वर्णहीने माषावरे पूर्वः साहसदण्डः, प्रमाणहीने मध्यमः, तुलाप्रतिमानोपधावुत्तमः, कृतभाण्डोपधौ च ।**

---

प्रतिगृह्णीयुः स्वार्पितवर्णप्रमाणकमेव निक्षेपं प्रतिगृह्णीयुः, न तु तदभ्यधिकवर्णप्रमाणकं कालातिपातदोषापदेशेन प्रार्थयेयुः, न वा पुत्रादीनां वेतनहानिर्दण्डो वेत्यभिप्रायः । अपरा व्याख्या — कालान्तरादपि देशविभ्रमादिनिमित्ते कालातिपाते जातेऽपि, तथाविधमेव यथानिक्षिप्तमघटितमेव, अर्पयेयुः कारवः, निक्षेपकाश्च प्रतिगृह्णीयुरिति । तत्रापवादमाह —क्षीणपरिशीर्णाभ्यामन्यत्र उपभोगघृष्टं प्रच्युतावयवं च निक्षेपमपहाय । क्षीणपरिशीर्णयोस्तु दण्डो दाप्य एव ।

**आवेशनिभिरिति ।** सुवर्णपुद्गललक्षणप्रयोगेषु सुवर्णः किञ्जल्कवर्णादिः पुद्गलम् आभरणभृङ्गारादि लक्षणं मुद्रा एतेषां स्वर्णादिसम्बन्धिनां प्रयोगेषु व्यवहारेषु हरणोपायानुष्ठानेषु वा, तत्तत् छलमच्छलं च ज्ञेयं सर्वं वस्तुतत्त्वम्, आवेशनिभिर्जानीयात् शिल्पिद्वारेण विद्यात्, सौवर्णिकः ।

'अन्यत्र क्षीणपरिशीर्णाभ्यामि'त्युक्तस्य प्रतिप्रसवमाह — तप्तेत्यादि । तप्तकलधौतकयोः अशुद्धस्वर्णरजतयोर्विषये, सुवर्णे काकणिकः षोडशमाषके माषचतुर्भागप्रमाणः, क्षयो देयः निक्षेपं घटितं तावन्मात्रन्यूनमेव निक्षेपकः प्रतिगृह्णीयात् । तीक्ष्णकाकणी कालायसकाकणी, रूप्याद्विगुणा रजतकाकणीद्वययुक्ता, रागप्रक्षेपः रागार्थं षोडशमाषकस्वर्णे प्रक्षेप्तव्येत्यर्थः । तस्य षड्भागः प्रक्षिप्तकाकणीत्रयस्य षड्भागः अर्थादर्धकाकणिकः, क्षयः देयो भवति ।

अथ दण्डमाह —**वर्णेत्यादि** । माषावरे वर्णहीने माषप्रमाणे सुवर्णे उत्कृष्टवर्णहानिं नीते सति, पूर्वः साहसदण्डः । माषावरे प्रमाणहीने प्रतिमानहानिं नीते सति, मध्यमः साहसदण्डः । तुलाप्रतिमानोपधौ न केवलं माषमात्रप्रतिमानहानिः, किन्तु हापितप्रतिमानस्य पूरणकैतवमपि यत्र प्रयुज्यते तादृशे विषय इत्यर्थः, उत्तमः साहसदण्डः । कृतभाण्डोपधौ च माषावरविषये घटितरूपपरिवर्तनादिकैतवे च, उत्तमः साहसदण्डः । अनया दिशा द्विमाषत्रिमाषादिविषयहान्यादौ तत्तद्दण्डद्वैगुण्यत्रैगुण्यादिकमूह्यम् ।

सौवर्णिकेनादृष्टमन्यत्र वा प्रयोगं कारयतो द्वादशपणो दण्डः, कर्तुर्द्विगुणः, सापसारश्चेत्। अनपसारः कण्टकशोधनाय नीयेत। कर्तुश्च द्विशतो दण्डः पणच्छेदनं वा।

तुलाप्रतिमानभाण्डं पौतवहस्तात् क्रीणीयुः। अन्यथा द्वादशपणो दण्डः।

घनं घनसुषिरं संयूह्यमवलेप्यं सङ्घात्यं वासितकं च कारुकर्म।

तुलाविषममपसारणं विस्रावणं पेटकः पिङ्कश्चेति हरणोपायाः।

सन्नामिन्युत्कीर्णिका भिन्नमस्तकोपकण्ठी कुशिक्या सकटुकक्ष्या

---

सौवर्णिकेनाननुमतं विशिखायाम्, अनुमतमपि वा विशिखातोऽन्यत्रालङ्कारादिनिर्माणं कारयतः कर्तुश्च दण्डमाह — **सौवर्णिकेनेत्यादि**। सापसारश्चेदिति कारयिता यदि सापसारस्तदायं दण्ड इत्यर्थः। अपसारोऽपसरणं तच्च स्वर्णादेः स्वामिशुद्धागमप्रतिपादनेन चोरशङ्काकलङ्कादात्मव्यावृत्तिः, तद्वान् सापसारः। अनपसारविषये त्वाह — **अनपसार इति**। अनपसारश्चेत् कारयिता, कण्टकशोधनाय वाक्यकर्मानुयोगादिना शुद्धाशुद्धत्वनिर्णयाय, नीयेत प्रदेष्टृसन्निधिम्। कर्तुश्च स्वर्णकारादेरनपसारस्य, द्विशतो दण्डो भवति। तस्य द्विशतपणदण्डदानासामर्थ्ये त्वाह — **पणच्छेदनं वेति**। पणच्छेदनं पणनसाधनपञ्चाङ्गुलिच्छेदनम्।

**तुलाप्रतिमानेत्यादि**। तुलाप्रतिमानभाण्डं तुलाप्रतिमानसाधनं माषद्विमाषादिकम्, उपलक्षणात् प्रस्थद्रोणादिकं मानसाधनं च, पौतवहस्तात् वक्ष्यमाणपौतवाध्यक्षसकाशात्, क्रीणीयुः क्रीत्वा तेन व्यवहरेयुः सुवर्णकारादयः। तुलामानभाण्डमिति पाठे तुलाभाण्डं माषद्विमाषादिकं मानभाण्डं प्रस्थद्रोणादिकं चेति व्याख्येयम्। अन्यथा स्वयं निर्माणेऽन्यतः क्रयणे वा, द्वादशपणो दण्डः।

अथ हरणोपायद्वारभूतं कारोः कर्म षट्प्रकारमाह — **घनमित्यादि**। घनम् अङ्गुलीयकादि, घनसुषिरं भृङ्गारादि, संयूह्यं स्थूलपत्रयोजनम्, अवलेप्यं लघुपत्रयोजनं, सङ्घात्यं कटिसूत्रादि, वासितकं रसादिना वासितम्।

तेषु कर्मसु प्रयोज्यान् पञ्च हरणोपायान् नामत उद्दिशति — **तुलेत्यादि**।

तत्र तुलाविषममाह — **सन्नामिनीत्यादि**। सन्नामिनी मृदुलोहनिर्मिता यथाकामसंनाम्या, उत्कीर्णिका तीक्ष्णचूर्णेन पारतेन वा पूरिताभ्यन्तरसुषिरा,

पारिवेल्ल्ययस्कान्ता च दुष्टतुलाः ।

रूप्यस्य द्वौ भागावेकः शुल्वस्य त्रिपुटकम् । तेनाकरोद्गतमपसार्यते तत् त्रिपुटकापसारितं, शुल्वेन शुल्बापसारितं, वेल्लकेन वेल्लकापसारितं, शुल्बार्धसारेण हेम्ना हेमापसारितम् ।

मूकमूषा पूतिकिट्टः करटकमुखं नाली सन्दंशो जोङ्गनी सुवर्चिका लवणं तदेव सुवर्णमित्यपसारणमार्गाः । पूर्वप्रणिहिता वा पिण्डवालुका मूषाभेदादग्निष्ठा उद्ध्रियन्ते ।

---

भिन्नमस्तका सरन्ध्राग्रा सा हि वाताभिमुखं धृता वातेन नामिता भवतीति, उपकण्ठी ग्रन्थिबहुला, कुशिक्या शिक्यं तोल्यवस्तुनिवेशाधारः तत् कुत्सितं यस्याः सा, सकटुकक्ष्या अप्रवणसूत्रा, पारिवेल्ली परिवेल्लः परिचलनं तद्वती, अयस्कान्ता अयस्कान्ताख्यलोहनिर्मिता, सा हि यतः स्वर्णं ततो याति । चः समुच्चये । अष्टावेता दुष्टतुलाः । इत्थं सम्भाविताष्टविधदुष्टतुलं तुलाविषमम् ।

अथापसारणमुच्यते । तत्र यदसारद्रव्यं प्रक्षिप्य सारद्रव्यमपसार्यतेऽपह्रियते तदपद्रव्यं चतुर्विधमादावाह — रूप्यस्येति । द्वौ रूप्यस्य भागौ एकः शुल्बस्य भाग इति भागत्रयमिदं मेलयित्वावर्तितं, त्रिपुटकं तत्संज्ञम् । तेन त्रिपुटकेन प्रक्षिप्तेन, आकरोद्गतं शुद्धम्, अपसार्यते आकर एवाशुद्धमिदमुत्पन्नमिति व्यपदिश्यापह्रियते, तत् तथाविधमपसारणसाधनं, त्रिपुटकापसारितं तदाख्यमपद्रव्यमेकम् । शुल्वेन ताम्रप्रक्षेपेण अपसार्यते तथापह्रियते, तत् शुल्बापसारितं तदाख्यम् अपसारणसाधनं द्वितीयम् । वेल्लकेन तीक्ष्णलोहं रूप्यं च समभागमावर्तितं वेल्लकमिति प्रसिद्धं तेन साधनेन प्रक्षिप्तेन, अपसार्यते, तद् वेल्लकापसारितं तृतीयम् । शुल्बार्धसारेण ताम्रसमभागयोगावर्तितेन, हेम्ना साधनेन, अपसार्यते तथापह्रियते, तत् तथाविधं साधनं, हेमापसारितं तत्संज्ञं चतुर्थम् ।

अथापद्रव्यप्रक्षेपेण सारद्रव्यापहरणस्य मार्गानाह — मूकमूषेत्यादि । मूकमूषा ससम्पुटार्धमूषा, पूतिकिट्टो लोहमलं, करटकमुखं काकमुखं कर्तरीमुखं वा, नाली प्रसिद्धा, सन्दंशः कङ्कमुखं, जोङ्गनी लोहकटिका, सुवर्चिका क्षारविशेषः, लवणं प्रसिद्धम् । तदेव सुवर्णमिति तादृशं हीनवर्णकमेवाकरोद्गतं सुवर्णमिति मिथ्यावादः, अपसारणमार्गाः त एते सुवर्णापहरणोपायाः । अय-

**पश्चाद्बन्धने आचितकपत्रपरीक्षायां वा रूप्यरूपेण परिवर्तनं विस्रावणम्, पिण्डवालुकानां लोहपिण्डवालुकाभिर्वा ।**

**गाढश्चाभ्युद्धार्यश्च पेटकः संयूह्यावलेप्यसङ्घात्येषु क्रियते । सीसरूपं सुवर्णपत्रेणावलिप्तमभ्यन्तरमष्टकेन बद्धं गाढपेटकः । स एव पटलसम्पुटेष्वभ्युद्धार्यः । पत्रमाश्लिष्टं यमकपत्रं वावलेप्येषु क्रियते ।**

---

मर्थः — आकरोद्गते मूकमूषायामावर्त्यमाने शुद्धसुवर्णे लोहमलहरणव्याजेन सुवर्चिकालवणक्षेपव्याजेन च त्रिपुटकादिकमपद्रव्यं प्रक्षिप्य करटमुखादिना साधनेन शुद्धसुवर्णमपहरन्ति सुवर्णकाराः कृतकच्छायमीदृशमेव सुवर्णमाकरादुद्गतमिति वदन्त इति । हरणोपायविकल्पमाह — **पूर्वप्रणिहिता वेति** । पूर्वप्राणिहिताः पूर्वमेवाग्नौ प्रक्षिप्ताः, पिण्डवालुका वा अपसारणमार्गा इति सम्बध्यते । द्रव्यधात्वनुगमपरिगृहीततच्छायाः सूक्ष्मवालुकाः द्रवीभूतेन रूप्येण सुवर्णेन वा सम्पर्कात् पिण्डतां प्रतिपन्नाः पिण्डवालुकाः । उपायीभावप्रकारमाह — **मूषाभेदादग्निष्ठा उद्ध्रियन्त** इति । पूर्वमेवाग्निप्रक्षिप्तपिण्डवालुकाप्रमाणं सारद्रव्यमपहृत्य मूषा भिन्नेत्यपदेशेन तत्सम्पृक्तास्ता एव पिण्डवालुकास्तत्स्वामिसमक्षमग्नेरुद्ध्रियन्त इत्यर्थः ।

विस्रावणमाह — **पश्चादित्यादि** । पश्चाद्बन्धने पूर्वं निर्मितस्य उत्तरकालसन्धानप्रसङ्गे, आचितकपत्रपरीक्षायां वा प्रचुरघटितपत्रपरीक्षाप्रसक्तौ वा, रूप्यरूपेण परिवर्तनं रजतभाण्डप्रक्षेपेण सुवर्णमयस्य विनिमानं, विस्रावणम् । इत्येको विस्रावणप्रकारः । अपरमाह — **पिण्डेत्यादि** । पिण्डवालुकानां सुवर्णाकरसम्भूतानां, लोहपिण्डवालुकाभिः लोहाकरसम्भूताभिर्वालुकाभिः परिवर्तनं वा विस्रावणम् ।

पेटकमाह — **गाढश्चेति** । पेटकः संश्लेषः, पिटधातोः संश्लेषणार्थत्वात्, स गाढश्च अभ्युद्धार्यश्चेति द्विविधः, संयूह्यावलेप्यसङ्घात्येषु संयूह्यादिषु त्रिषु पूर्वोक्तेषु कर्मसु विषये, क्रियते अनुष्ठीयते । सीसरूपं सीसपत्रं, सुवर्णपत्रेण, अवलिप्तम् आच्छादितम्, अभ्यन्तरम् आच्छादिताच्छादकयोरन्तरालम्, अष्टकेन बद्धं जतुसर्जरसादिना पटलसम्पुटेषु दृढसंश्लेषणार्थं बद्धं, यदि भवतीति शेषः । गाढपेटकः अर्थात् स एष बन्धो गाढपेटकाख्यः । **स एवेति** । स एव पेटकः, पटलसम्पुटेषु अभ्युद्धार्यः अष्टकबन्धरहितत्वादभ्युद्धर्तुं शक्य इति सोऽभ्युद्धार्यपेटकः । स एष द्रव्यापद्रव्ययोः समप्रविभागिके संयूहने

शुल्बं तारं वा गर्भः पत्राणाम्। सङ्घात्येषु क्रियते शुल्बरूपं सुवर्णपत्रसंहतं प्रमृष्टं सुपार्श्वम्। तदेव यमकपत्रसंहतं प्रमृष्टम्। ताम्रताररूपं चोत्तरवर्णकः।

तदुभयं तापनिकषाभ्यां निश्शब्दोल्लेखनाभ्यां वा विद्यात्। अभ्युद्धार्यं बदराम्ले लवणोदके वा सादयन्ति। इति पेटकः।

घनसुषिरे वा रूपे सुवर्णमृन्मालुकाहिङ्गुलुककल्को वा तप्तोऽवतिष्ठते। दृढवास्तुके वा रूपे वालुकामिश्रजतुगान्धारपङ्को वा तप्तोऽव-

---

हरणप्रकारः। अथ सारार्धभागेषु लेप्येषु हरणप्रकारमाह — पत्रायात। पत्रं सुवर्णपत्रम्, आश्लिष्टम् एकपार्श्वयोजितं, यमकपत्रं वा उभयपार्श्वयोजितं वा अवलेप्येषु, क्रियते। बहिःपत्रमुक्त्वा गर्भपत्रमाह—शुल्बं तारं वा, पत्राणां सुवर्णपत्राणां, गर्भः क्रियते। सङ्घात्यविषयं विधिमाह— सङ्घात्येष्विति। सङ्घात्येषु विषये, शुल्बरूपं ताम्रभाण्डं, सुवर्णपत्रसंहतम् एकपार्श्वे सुवर्णपत्रच्छादितं, प्रमृष्टं प्रकर्षेणोज्ज्वलितं, सुपार्श्वं शोभनैकपार्श्वं, क्रियते। तदेव शुल्बरूपं, यमकपत्रसंहतम् उभयपार्श्वयोः सुवर्णपत्रावच्छादितं, प्रमृष्टं, क्रियते। पूर्वस्य सुपार्श्वमिति संज्ञा समनन्तरस्य प्रमृष्टमिति संज्ञेत्येके। ताम्रताररूपं च उत्तरवर्णक इति। न केवलं सुवर्णपत्रं यथोक्तमवच्छादनार्थमुपयुज्यते, किन्तु ताम्रभाण्डरजतभाण्डे अपीत्यर्थः। ताभ्यां पुनरौचित्यात् कृष्णायसादिभाण्डमवच्छाद्यं भवतीत्यवगन्तव्यम्।

पेटकस्य परीक्षामाह — तदुभयमिति। तदुभयं गाढपेटकम् अभ्युद्धार्यपेटकं च, तापनिकषाभ्याम् अग्नितापननिकषघर्षणाभ्यां, निश्शब्दोल्लेखनाभ्यां वा निश्शब्दं शब्दहीनं छेदनम् उल्लेखनं तीक्ष्णमुखलेखनं ताभ्यां वा, विद्यात्। अभ्युद्धार्ये विशेषमाह —अभ्युद्धार्यं, बदराम्ले कर्कन्धूफलरसे, लवणोदके वा, सादयन्ति निवेशयन्ति। तथा करणे लोहितवर्णः सञ्जायत इति भाषाटीका। इति पेटकः व्याख्यात इति शेषः।

पञ्चविधं पिङ्कं तत्परीक्षणं चाह — घनेत्यादि। घनसुषिरे रूपे घने सुषिरवति च भाण्डे कटकाद्यलङ्कारे, सुवर्णमृन्मालुकाहिङ्गुलुककल्को वा सुवर्णमृत् सुवर्णमालुका च धातुविशेषौ हिङ्गुलको जातिहिङ्गुलकः एतेषां मिलितानां कल्कः, तप्तः तापयित्वा प्रक्षिप्तः, अवतिष्ठते अवस्थितो भवति। अतस्तद्योजनेन तावत् स्वर्णमपह्रियत इत्यर्थः। अन्यदपद्रव्यमाह —दृढवास्तुके रूपे वा दृढ-

तिष्ठते । तयोस्तापनमवध्वंसनं वा शुद्धिः । सपरिभाण्डे वा रूपे लवणमुल्कया कटुशर्करया तप्तमवतिष्ठते । तस्य क्वाथनं शुद्धिः । अभ्रपटलमष्टकेन द्विगुणवास्तुके वा रूपे बध्यते । तस्यापिहितकाचकस्योदके निमज्जत एकदेशः सीदति । पटलान्तरेषु वा सूच्या भिद्यते । मणयो रूप्यं सुवर्णं वा घनसुषिराणां पिङ्कः । तस्य तापनमवध्वंसनं वा शुद्धिः । इति पिङ्कः ।

तस्माद् वज्रमणिमुक्ताप्रवालरूपाणां जातिरूपवर्णप्रमाणपुद्गललक्षणान्युपलभेत ।

---

पीठबन्धे अलङ्कारे वा, वालुकामिश्रः पिण्डवालुकायुक्तः जतुगान्धारपङ्कः लाक्षासिन्दूरपङ्कः, तप्तोऽवतिष्ठते । तत्र शुद्धिमाह — तयोः घनसुषिर-दृढवास्तुकयोर्विषये, तापनं दाहः, अवध्वंसनं वा ताडनं वा, शुद्धिः शोधनोपायः । सपरिभाण्डे रूपे पृषतमणिबन्धे, लवणम्, उल्कया ज्वालया, कटुशर्करया तप्तं मृदुपाषाणविशेषेण सह तप्तम्, अवतिष्ठते । तस्य, क्वाथनम् अर्थाद् बदराम्लोदके, शुद्धिः शुद्धिहेतुः । पिङ्कस्य प्रकारान्तरमाह— अभ्रेत्यादि । अभ्रपटलं काचमणिः, अष्टकेन द्विगुणवास्तुके लाक्षादिना द्विगुणावगाढबन्धे, रूपे, बध्यते सम्बध्यते अवतिष्ठत इत्यर्थः । तत्परीक्षामाह — तस्येति । तस्य प्रत्युप्तमणेरन्तरवच्छादितकाचस्य सुवर्णाभरणस्य, उदके निमज्जतः परीक्षार्थं बदराम्लोदके प्रक्षिप्तस्य, एकदेशः सीदति अभ्रपटलरहितोऽवयवो गुरुत्वादधो गच्छति । अर्थादेकदेशान्तरमभ्रपटलयुक्तं लघुत्वादधो न गच्छति । अभ्रपटलातिरिक्तताम्रपटलादिविषये तु सूच्या भेदनमेव शुद्धिज्ञानोपाय इत्याह — पटलान्तरेष्विति । पुनः पिङ्कस्य घनसुषिराभरणविषये त्रीन् प्रकारानाह — मणय इति । घनसुषिराणां घनसुषिराभरणविषये, मणयः पिङ्कः काचमणयो जात्यमणिहरणोपायः, रूप्यं पिङ्कः रजतं सुवर्णहरणोपायः, सुवर्णं पिङ्कः अशुद्धं स्वर्णं शुद्धस्वर्णहरणोपायः । तत्र शोधनप्रकारमाह—तस्येत्यादि । इति पिङ्कः व्याख्यात इति शेषः ।

तस्मादिति । उच्चावचहरणोपायसम्भवात्, वज्रमणिमुक्ताप्रवालरूपाणां वज्रादिरूपाणां चतुर्णां, जातिरूपवर्णप्रमाणपुद्गललक्षणानि जातिरुत्पत्तिः रूपमाकारः वर्णो रागः प्रमाणं माषकादिपरिमाणं पुद्गलमाभरणं लक्षणं लक्ष्म, एतानि, उपलभेत विद्यात् ।

कृतभाण्डपरीक्षायां पुराणभाण्डप्रतिसंस्कारे वा चत्वारो हरणोपायाः—परिकुट्टनमवच्छेदनमुल्लेखनं परिमर्दनं वा। पेटकापदेशेन पृषतं गुणं पिटकां वा यत् परिशातयन्ति तत् परिकुट्टनम्। यद् द्विगुणवास्तुकानां वा रूपे सीसरूपं प्रक्षिप्य अभ्यन्तरमवच्छिन्दन्ति तदवच्छेदनम्। यद् घनानां तीक्ष्णेनोल्लिखन्ति तदुल्लेखनम्। हरितालमनःशिलाहिङ्गुलकचूर्णानामन्यतमेन कुरुविन्दचूर्णेन वा वस्त्रं संयूह्य यत् परिमृद्नन्ति तत् परिमर्दनम्। तेन सौवर्णराजतानि भाण्डानि क्षीयन्ते। न चैषां किञ्चिदवरुग्णं भवति।

भग्नखण्डघृष्टानां संयूह्यानां सदृशेनानुमानं कुर्यात्। अव-

---

इदानीं कृतभाण्डपरीक्षणविषयं परिकुट्टनादिकं हरणोपायचतुष्टयमाह—कृतेत्यादि। पुराणभाण्डप्रतिसंस्कारे वा जीर्णभाण्डनवीकरणे वा। परिकुट्टनादिकं लक्षयति—पेटकेत्यादि। पेटकापदेशेन पूर्वोक्तपेटकपरीक्षणव्याजेन, पृषतं क्षुद्रगुटिकां, गुणं कटकाद्यंशमल्पं, पिटकां वा बृहदंशं वा, यत् परिशातयन्ति पातयन्ति, तत् परिकुट्टनं तदाख्यम्। द्विगुणवास्तुकानां बहुपत्रपुटघटितानां, रूपे भाण्डे, सीसरूपं सीसपत्रं सुवर्णानुलिप्तं, प्रक्षिप्य अभ्यन्तरं सुवर्णपत्रं, यदवच्छिन्दन्ति अवच्छिद्यापहरन्ति, तदवच्छेदनं नाम। घनानां घननिर्मितानां, रूप इति वर्तते, तीक्ष्णेन निशितशस्त्रेण, यदुल्लिखन्ति, तद् उल्लेखनम्। हरितालमनःशिलाहिङ्गुलकानाम् अन्यतमचूर्णेन वा, कुरुविन्दाख्यपाषाणविशेषचूर्णेन च, वस्त्रं, संयूह्य मिश्रयित्वा, यत् परिमृद्नन्ति यत् परिघर्षयन्ति, तत् परिमर्दनं तदाख्यम्। तेन परिमर्दनेन, सौवर्णराजतानि भाण्डानि, क्षीयन्ते प्रमाणहानिं प्राप्नुवन्ति। एषां भाण्डानाम्, अवरुग्णं भङ्गः, किञ्चिद् न च भवति मनागपि न भवति च। सोऽयं विनैव भाण्डभङ्गमपहरणोपायः।

परिकुट्टनादिकृतं वर्णकणिकादिपातनम् एतावदिति कथं निर्णेतव्यं तत्राह—भग्नेत्यादि। संयूह्यानां दृढपत्रघटितभाण्डानां, भग्नखण्डघृष्टानां भग्नं परिकुट्टनशातितं खण्डमवच्छेदनहृतं घृष्टमुल्लेखनपरिमर्दनकर्मोपहृतम् एषां भग्नादीनां, सदृशेनानुमानं कुर्यात् सजातीयावयवप्रमाणेन लिङ्गेनानुमितिं कुर्यात्, भग्नस्यावयवस्याभग्नावयवप्रमाणेन खण्डस्याखण्डावयवप्रमाणेन घृष्टस्याघृष्टावयवप्रमाणेन चेयत्तां निश्चिनुयादित्यर्थः। अवलेप्यानामिति। अव-

लेप्यानां यावदुत्पाटितं तावदुत्पाट्यानुमानं कुर्यात् । विरूपाणां वा । तापनमुदकपेषणं च बहुशः कुर्यात् ।

अवक्षेपः प्रतिमानमग्निर्गण्डिका भण्डिकाधिकरणी पिञ्छः सूत्रं चेल्लम् बोल्लनं शिर उत्सङ्गो मक्षिका स्वकायेक्षा दृतिरुदकशरावमग्निष्ठमिति काचं विद्यात् ।

राजतानां विस्रं मलग्राहि परुषं प्रस्तीतं विवर्णं वा दुष्टमिति विद्यात् ।

---

लेप्यानां तनुपत्रघटितभाण्डानां, यावदुत्पाटितं तावदुत्पाट्यानुमानं कुर्यात् यावानंशोऽवच्छिद्य गृहीतस्तावन्तमपरमंशमवच्छिद्य तत्प्रतिमानेनापहृतांशमानं निश्चिनुयात् । विरूपाणामिति । विरूपाणां वा प्रचुरापद्रव्यमिश्रणेन हीनवर्णकतामापादितानां सुवर्णभाण्डानां च, सदृशेनानुमानं कुर्यादित्यनुवर्तते, प्रतिमिततदीयैकांशस्य शुद्धीकरणेन वर्णहानीयत्तां विज्ञाय तत्सादृश्येन शेषांशानां वर्णहानीयत्तामभ्यूहेदित्यर्थः । शोधनप्रकारमाह—तापनमिति । तापनं पत्रीकृत्याग्नौ दहनम्, उदकपेषणं च तत्समुदके प्रक्षिप्य चुक्रिकायोजनेन कुट्टनं च, बहुशो बहुकृत्वः, कुर्याद् यावद् वैवर्ण्यमपैति तावदित्यार्थम् । इयत्तानिर्णयफलं तु 'वर्णहीने माषकावरे पूर्वः साहसदण्ड' इत्यादि पूर्वोक्तदण्डविधानम् ।

पूर्वोक्ताकरोद्भवापसारणमार्गातिरेकिणोऽवक्षेपादीन् सप्तदश हरणोपायानाह — अवक्षेप इति । अवक्षेपः हस्तलाघवेन सारमपहृत्यापद्रव्यप्रक्षेपः, प्रतिमानं तद्विनिमयादि, अग्निः अग्निमध्ये हरणप्रयोगः, गण्डिका काष्ठाधिकरणी रत्नप्रतिवापाधारकाष्ठं, भण्डिका उपस्काराधारः स्वर्णद्रवनिषेकसाधनम् , अधिकरणी अयस्पात्रविशेषः, पिञ्छः मयूरबर्हः, सूत्रं सुवर्णतुलातन्तुः, चेल्लं वस्त्रं, बोल्लनं कथाव्याजेन द्रष्टृचित्तव्याक्षेपकरणं, चेल्लबोल्लनमिति समस्तपाठे वस्त्रपटलिका, शिरः शीर्षकण्डूयनादि, उत्सङ्गः अङ्कः उपलक्षणाद् गुह्यप्रदेशश्च, मक्षिका मक्षिकानिवारणव्याजेन निर्यासद्रवलिप्तस्वाङ्गसंश्लेषणं, स्वकायेक्षा स्वेदादिदर्शनव्याजः, दृतिः ध्मानभस्त्रा, उदकशरावं जलपात्रम् , अग्निष्ठम् अग्निप्रक्षिप्तमपद्रव्यम् , इति एवंप्रकारं, काचम् अपहरणोपायं, विद्यात् ।

राजतानां पञ्च दुष्टिचिह्नान्याह — राजतानामित्यादि । राजतोक्त्या पूर्वोक्तस्य स्वर्णविषयत्वं सूचितम् । विस्रं सीसादिसंसर्गदुर्गन्धि । मल-

**तत्प्रदिष्टः पञ्चग्रामीं दशग्रामीं वा गोपश्चिन्तयेत्।**

**सीमावरोधेन ग्रामाग्रं, कृष्टाकृष्टस्थलकेदारारामषण्डवाटवनवास्तुचैत्यदेवगृहसेतुबन्धश्मशानसत्त्रप्रपापुण्यस्थानविवीतपथिसङ्ख्यानेन क्षेत्राग्रं, तेन सीम्नां क्षेत्राणां च मर्यादारण्यपथिप्रमाणसम्प्रदानविक्रयानुग्रहपरिहारनिबन्धान् कारयेत्। गृहाणां च करदाकरदसङ्ख्यानेन।**

---

इत्थं कृतनिबन्धस्य जनपदस्य चतुर्भागमेकैकमेकैकः स्थानिकश्चिन्तयेदिति वक्ष्यति। चतुर्भागेऽपि ग्रामान् पञ्चशो दशशो वा विभज्य एकैकस्मिन् ग्रामविभागे स्थानिकनियम्यमवान्तरचिन्तकं गोपसंज्ञमेकैकं कुर्यादित्याह — **तत्प्रादिष्ट** इति। तेन समाहर्त्रा प्रदिष्टो नियुक्तः पुरुषः, पञ्चग्रामीं दशग्रामीं वा ग्रामाणामुत्तमत्वे तत्पञ्चकम् अधमत्वे तद्दशकम् अर्थान्मध्यमत्वे तत्षट्कादिकं च यथोचितं, गोपश्चिन्तयेत् गोपसंज्ञः सन् चिन्तयेत्, यश्चिन्तयति स गोपसंज्ञयोच्यत इत्यर्थः।

कथं चिन्तयेदित्याह — **सीमावरोधेने**ति। नदीशैलादिसीमपरिच्छेदेन, ग्रामाग्रं ग्रामपरिमाणं, कारयेत् निबन्धयेत्। कृष्टाकृष्टाद्यष्टादशसंख्यानेन, क्षेत्राग्रं क्षेत्रपरिमाणं, कारयेत् एतावत् कृष्टमेतावदकृष्टमित्येवं कृष्टादिक्षेत्रं परिच्छिद्य निबन्धयेत्। तत्र कृष्टं कृष्टपच्यव्रीह्याद्युत्पत्तिक्षेत्रम्, अकृष्टम् अकृष्टपच्यनीवाराद्युत्पत्तिक्षेत्रं, स्थलम् उज्जटदेशः, केदारः शालेयादिक्षेत्रम्, आरामः उपवनं, षण्डः कदल्यादिक्षेत्रं, वाटः इक्ष्वादिभूमिः, वनं ग्रामवास्युपजीव्यवृक्षवृन्दस्थानं, वास्तु ग्रामभूमिः, चैत्यः उद्देशवृक्षः, देवगृहादित्रयं प्रसिद्धं, सत्त्रम् अन्नदानशाला, प्रपा पानीयशाला, पुण्यस्थानं तीर्थादि, विवीतं गोप्रचारप्रदेशः, पन्थाः रथशकटपद्गतागतमार्गः। तेनेति। तेन संख्यानेन, सीम्नां नदीशैलादीनां, क्षेत्राणां च, मर्यादादिनिबन्धान् कारयेत् मर्यादादिपुस्तकानि लेखयेत्। तत्र मर्यादा परस्परावधिः, अरण्यमनुपजीव्यवनं, पन्थाः कृष्टादिपरस्परप्रवेशनिर्गममार्गः, प्रमाणं स्वस्वपरिमाणं, संप्रदानम् अमुकेनामुकस्य दत्तमितीदृशं, विक्रयः प्रसिद्धः, अनुग्रहः धान्याद्यृणदानेन कर्षकाणामुपकारः, परिहारः करमोक्षः। गृहाणां च करदाकरदसंख्यानेन, निबन्धान् कारयेदिति वर्तते एतावन्ति गृहाणि करदायकैर्जनैरध्युषितानि एतावन्ति चाकरदायकैरित्येवं संख्याय पुस्तकेषु लेखयेत्।

**तेषु चैतावच्चातुर्वर्ण्यमेतावन्तः कर्षकगोरक्षकवैदेहककारुकर्मकरदासाश्चैतावच्च द्विपदचतुष्पदमिदं च हिरण्यविष्टिशुल्कदण्डं समुत्तिष्ठतीति ।**

**कुलानां च स्त्रीपुरुषाणां बालवृद्धकर्मचरित्राजीवव्ययपरिमाणं विद्यात् ।**

**एवञ्च जनपदचतुर्भागं स्थानिकः चिन्तयेत् ।**

**गोपस्थानिकस्थानेषु प्रदेष्टारः कार्यकरणं बलिप्रग्रहं च कुर्युः ।**

---

तेषु चेति । तेषु च गृहेषु, एतावत् चातुर्वर्ण्यम् एतावन्तोऽमुकामुकवर्णभवा जनाः, एतावन्तः कर्षकादयः षड्वर्गाश्च, एतावच्च द्विपदचतुष्पदमिदं च पिण्डेनैतावन्तो मनुष्याश्च पशवश्चैते, वसन्तीति सर्वत्र शेषः । इदं च हिरण्यविष्टिशुल्कदण्डं हिरण्यं स्वर्णरूप्यादि विष्टिः कर्मकरः शुल्कः घट्टदेयं दण्डः सैन्यः इत्येतच्चतुष्टयं वार्षिकं, समुत्तिष्ठति उत्पद्यते राजार्थम्, इति अनेन प्रकारेण, निबन्धान् कारयेदिति वर्तते ।

कुलानामिति । कुलानां च स्त्रीपुरुषाणां कुटुम्बसम्बन्धिनां च स्त्रीणां पुरुषाणां च, बालादिपरिमाणं बालवृद्धपरिमाणम् एतावद्वयस्काः स्त्रियः पुरुषाश्चेत्येवं वयःपरिच्छेदं कर्माणि वर्णजातिप्रसिद्धानि तत्परिमाणं चरित्रं देशजात्याद्याचारस्तत्परिमाणम् आजीवो वृत्तिः अर्थात् तन्निमित्त आयस्तत्परिमाणं व्ययः कुटुम्बभरणार्थधनविनियोगस्तत्परिमाणं च, विद्यात्, गोपः ।

एवञ्चेति । अनेन प्रकारेण, जनपदचतुर्भागं, स्थानिकः स्थानिकपदव्यपदेश्यश्चतुर्भागनायकः, चिन्तयेत् ।

गोपेत्यादि । गोपस्थानिकस्थानेषु गोपानां स्थानिकानां च स्वव्यापारानुष्ठानप्रदेशेषु, प्रदेष्टारः कण्टकशोधनाधिकारिणः, कार्यकरणं कण्टकोद्धरणलक्षणकार्यानुष्ठानं, बलिप्रग्रहं च बलीनां गोपस्थानिकनिबन्धारूढानां राजार्थानां प्रसभग्रहणं च अर्थात् स्वयमदायकेभ्यः, अथवा बलिप्रग्रहं बलिनां राष्ट्रमुख्यानां राजार्थोत्थापनविघ्नकारिणां प्रग्रहं गोपस्थानिकविधेयास्ते यथा स्युस्तथा दमनं, कुर्युः ।

इति समाहर्तृप्रचारः समाप्तः ।

**समाहर्तृप्रदिष्टाश्च गृहपतिकव्यञ्जना येषु ग्रामेषु प्रणिहितास्तेषां ग्रामाणां क्षेत्रगृहकुलाग्रं विद्युः । मानसञ्जाताभ्यां क्षेत्राणि भोगपरिहाराभ्यां गृहाणि वर्णकर्मभ्यां कुलानि च । तेषां जङ्घाग्रमायव्ययौ च विद्युः । प्रस्थितागतानां च प्रवासावासकारणमनर्थ्यानां च स्त्रीपुरुषाणां चारप्रचारं च विद्युः ।**

---

**गृहपतिकवैदेहकतापसव्यञ्जनाः प्रणिधय** इति सूत्रम् । गृहपतिकव्यञ्जना वैदेहकव्यञ्जनास्तापसव्यञ्जनाश्च संस्थाविशेषा गूढपुरुषोत्पत्तिप्रकरणोक्ताः, प्रणिधयः गूढपुरुषाः लक्षणया तेषां प्रणिधानानि ग्रामेषु जनपदेषु च नियोजनानि अभिधीयन्त इति सूत्रार्थः । गृहपतिकवैदेहकतापसव्यञ्जनप्रणिधय इति समस्तपाठे गृहपतिव्यञ्जनादीनां त्रयाणां संस्थाविशेषाणां प्रणिधयः प्रणिधानानि नियोजनानीति स्पष्ट एवार्थः । संस्थापञ्चके तिसृणां प्राधान्याद् ग्रहणमन्ययोरप्यभ्युपायत्वाविशेषादुपलक्षणम् । तेन कापटिकोदास्थितसंस्थयोरपि प्रणिधानं संगृहीतं द्रष्टव्यम् । संस्थाप्रणिधानं च ग्रामजनपदवृत्तान्तज्ञानस्य गोपस्थानिकप्रचारपरीक्षणस्य च समाहर्त्रवश्यापेक्षणीयस्याभ्युपायभूतं समाहर्तृप्रचारस्यैवाङ्गमिति तस्येहाभिधानसङ्गतिः ।

तत्र गृहपतिव्यञ्जनप्रणिधानं तावदाह — **समाहर्तृप्रदिष्टाश्चेति** । समाहर्त्रा नियुक्ताः, गृहपतिकव्यञ्जनाः, येषु ग्रामेषु, प्रणिहिताः नियोजिताः, तेषां ग्रामाणां, क्षेत्रगृहकुलाग्रं क्षेत्रसंख्यां गृहसंख्यां कुलसंख्यां च, विद्युः । कानि कानि कथं विद्युरित्याह — **मानसञ्जाताभ्यां क्षेत्राणीति** । मानेनायामविस्तारादिपरिच्छेदेन उत्पन्नसस्यपिण्डेन च क्षेत्राग्रं विद्युः । भोगपरिहाराभ्यां गृहाणि करकरमोक्षाभ्यां गृहवास्तव्यान्, विद्युः । वर्णकर्मभ्यां कुलानि च ब्राह्मणादिजात्या तथा यजनकृष्यादिकर्मणा कुटुम्बानि च, विद्युः । **तेषामिति** । कुलानां, जङ्घाग्रं जङ्घाशब्देन पादचारिणो लक्ष्यन्ते कुलसम्बन्धिनां पादचारिणां द्विपदचतुष्पदानामग्रम् इयत्ताम्, आयव्ययौ च धनोत्पत्तिविनियोगौ च, विद्युः । **प्रस्थितेत्यादि** । प्रस्थितागतानामिति व्यस्तसमस्तविपर्यस्तग्रहणं प्रस्थितानां निजाधिवासस्थलादन्यत्र वस्तुं गच्छताम्, आगतानां वस्तुमन्यप्रदेशादागतानां, प्रस्थितागतानां वस्तुमन्यत्र गत्वा पुनः प्रत्यागतानाम्, आगतप्रस्थितानां क्वचिद् वस्तुमागत्य ततोऽन्यत्र वस्तुं प्रस्थितानां चेत्यर्थः । प्रवासावासकारणं प्रवासे अध्युष्यमाणस्थलवासपरित्यागे आवासे

**एवं वैदेहकव्यञ्जनाः स्वभूमिजानां राजपण्यानां खनिसेतुवनकर्मान्तक्षेत्रजानां परिमाणमर्घं च विद्युः। परभूमिजातानां वारिस्थलपथोपयातानां सारफल्गुपण्यानां कर्मसु च। शुल्कवर्तन्यातिवाहिकगुल्मतरदेयभागभक्तपण्यागारप्रमाणं विद्युः।**

**एवं समाहर्तृप्रदिष्टास्तापसव्यञ्जनाः कर्षकगोरक्षकवैदेहकानामध्यक्षाणां च शौचाशौचं विद्युः। पुराणचोरव्यञ्जनाश्चान्तेवासिनश्चैत्यचतुष्पथशून्यपदोदपाननदीनिपानतीर्थायतनाश्रमारण्यशैलवनगहनेषु स्तेनामित्रप्रवीरपुरुषाणां च प्रवेशनस्थानगमनप्रयोजनान्युपलभेरन्।**

---

तदन्यस्थलवासपरिग्रहे च कारणं, विद्युः। अनर्थ्यानां च स्त्रीपुरुषाणाम् अनाशंसनीयानां नर्तकीबन्धक्यादीनां स्त्रीणां विटकितवादीनां पुरुषाणां च, प्रवासावासकारणं विद्युः। चारप्रचारं च परप्रयुक्तापसर्पप्रवृत्तिं च, विद्युः।

वैदेहकव्यञ्जनप्रणिधानमाह — **एवमिति**। एवं यथा गृहपतिव्यञ्जनास्तथा वैदेहकव्यञ्जनाः, स्वभूमिजानां राजपण्यानां पण्याध्यक्षप्रतिपादितानां, खनिसेतुवनकर्मान्तक्षेत्रजानां खनिजानां खन्यध्यक्षोक्तानां शङ्खवज्रादीनां सेतुजानां मत्स्यप्लवादीनां वनजानां कुप्याध्यक्षोक्तानां द्रव्यवनभवानां कर्मान्तजानां खातवप्रादिकर्मान्तभूम्युत्पन्नानां क्षेत्रजानां व्रीह्यादीनां सीताध्यक्षोक्तानां च, परिमाणम् इयत्ताम्, अर्घं मूल्यं च, विद्युः। परभूमिजातानां देशान्तरजातानां, वारिस्थलपथोपयातानां जलमार्गेण स्थलमार्गेण च स्वदेशमुपगतानां, सारफल्गुपण्यानां साराणां रत्नादीनां फल्गूनां शाकादीनां च पण्यानां, कर्मसु च क्रयविक्रयादिषु च, परिमाणमर्घं च विद्युरिति वर्तते। तथा शुल्काद्यष्टकप्रमाणं शुल्कस्य शुल्काध्यक्षोक्तस्य वर्तन्या अन्तपालादेयस्य आतिवाहिकस्य सार्थातिवाहनार्थस्य विवीताध्यक्षग्राह्यस्य गुल्मदेयस्य रक्षिसङ्घदेयस्य तरदेयस्य नावध्यक्षदेयस्य भागस्य सहव्यवहारिविभाज्यांशस्य भक्तस्य व्यवहर्तृपुरुषबलीवर्दादिभोजनव्ययस्य पण्यागारस्य पण्यगृहभाटकादेश्च प्रमाणम् इयत्तां, विद्युः।

तापसव्यञ्जनप्रणिधानमाह — **एवमिति**। अनेन प्रकारेण, समाहर्तृप्रदिष्टाः समाहर्तृनियुक्ताः, तापसव्यञ्जनाः, कर्षकगोरक्षकवैदेहकानाम्, अध्यक्षाणां च गोपादीनां च, शौचाशौचं विद्युः। **पुराणचोरव्यञ्जनाश्चेति**।

समाहर्ता जनपदं चिन्तयेदेवमुत्थितः ।
चिन्तयेयुश्च संस्थास्ताः संस्थाश्चान्याः स्वयोनयः ॥

इति कौटलीयार्थशास्त्रे अध्यक्षप्रचारे द्वितीयाधिकरणे पञ्चत्रिंशोऽध्यायः
समाहर्तृप्रचारः गृहपतिवैदेहकतापसव्यञ्जनप्रणिधयश्च,
आदितः षट्पञ्चाशः ॥

---

सन्धिच्छेदादिना परद्रव्यापहारिणश्चोराः ते चिराभ्यस्ततत्कर्माणः पुराणचोराः तद्व्यञ्जनास्तद्वेषाः, अन्तेवासिनः तापसव्यञ्जनशिष्याः, चैत्यादिष्वेकादशसु स्थानेषु, तत्र चैत्यं देवालयः चतुष्पथं शृङ्गाटकं शून्यपदं निर्जनस्थानम् उदपानः स्रोतःप्रापितावरुद्धजलो जलाधारः नदी प्रसिद्धा निपानम् उपकूपजलाशयः तीर्थायतनं पुण्योदकप्रदेशः आश्रमो मुनिगृहम् अरण्यं ब्रह्मसोमारण्यं शैलगहनवनगहने प्रसिद्धे एतेषु । स्थित्वेति शेषः । स्तेनामित्रप्रवीरपुरुषाणां च स्तेनानां चोराणाम् अमित्रपुरुषाणां शत्रुप्रयुक्तानां तीक्ष्णरसदादीनां प्रवीरपुरुषाणाम् अल्पनिमित्तपरमारणसाहसिकानां च, चकारादनर्थ्यस्त्रीपुरुषाणां च प्रवेशनस्थानगमनप्रयोजनानि अमुष्मिन् देशे अमुष्मिन् काले प्रवेशः स्थितिर्निर्गमनमित्येतानि प्रयोजनं च, उपलभेरन् जानीयुः ।

अध्यायान्ते श्लोकमाह—**समाहर्तेति**। एवम् उक्तेन प्रकारेण, उत्थित उद्युक्तः, समाहर्ता जनपदं चिन्तयेत्, अर्थाद् गोपस्थानिकसहायः । ताश्च संस्थाः समाहर्तृप्रदिष्टाः पूर्वोक्ताः गृहपतिकव्यञ्जनादयः संस्थाविशेषाः, जनपदं चिन्तयेयुः, चकाराद् गोपस्थानिकौ च । संस्थाश्च तांश्च तत्तद्व्यञ्जनयोनीन् संस्थाविशेषान्, अन्याः स्वयोनयः तत्तद्योनिसमानयोनयः संस्थाः, चिन्तयेयुः परीक्षेरन् । संस्थापरीक्षार्थस्य चेदं संस्थान्तरप्रणिधानस्य वचनं न तात्पर्यतो विध्यर्थं, किन्तु कर्मकराः प्रायोऽर्थलोभाद् राजार्थं वा हापयन्ति प्रजा वा परिपीडयन्तीत्यवश्यं तत्कर्मशोधने समाहर्त्रा नित्यं प्रतिजागरितव्यमित्युपदेशार्थम् । तेन संस्थाचिन्तनाय संस्थान्तरकल्पने संस्थानवस्थाप्रसङ्ग इति न चोदनीयम् ॥

इति कौटलीयार्थशास्त्रव्याख्यायाम् अध्यक्षप्रचारे द्वितीयाधिकरणे पञ्चत्रिंशोऽध्यायः
समाहर्तृप्रचारः गृहपतिवैदेहकतापसव्यञ्जनाः प्रणिधयश्च,
आदितः षट्पञ्चाशः ॥

---

५६. प्रक. नागरिकप्रणिधिः ।

समाहर्तृवन्नागरिको नगरं चिन्तयेत्। दशकुलीं गोपो, विंशतिकुलीं चत्वारिंशत्कुलीं वा । स तस्यां स्त्रीपुरुषाणां जातिगोत्रनामकर्मभिः जङ्घाग्रमायव्ययौ च विद्यात् ।

एवं दुर्गचतुर्भागं स्थानिकश्चिन्तयेत् ।

धर्मावसथिनः पाषण्डपथिकानावेद्य वासयेयुः । स्वप्रत्ययांश्च तपस्विनः श्रोत्रियांश्च ।

---

नागरिकप्रणिधिरिति सूत्रम् । नगरे स्थानीये नियुक्तो नागरिकः तस्य प्रणिधिः प्रणिधानं व्यापारे नियोजनम् अभिधीयत इति सूत्रार्थः । सर्वसमुदयानां यथोक्तरूपाणां रक्षणीयत्वाद् तद्रक्षणस्य तदाश्रयस्थानरक्षणाधीनत्वात् स्थानीयस्य तदाश्रयस्थानत्वात् तद्रक्षणस्येहाभिधानसङ्गतिः ।

समाहर्तृवदिति । नागरिकः, नगरं स्थानीयं, समाहर्तृवत् चिन्तयेत् यथा समाहर्ता जनपदं चतुर्धा विभज्य गोपस्थानिकसहायश्चिन्तयेत् तथा स्थानीयं चतुर्धा विभज्य गोपस्थानिकसहायश्चिन्तयेत् । तत्र गोपस्य चिन्तनीयं विषयमाह—दशकुलीमिति । दशकुलीं दशकुलानि उत्तमानि, गोपः, चिन्तयेदिति सम्बध्यते । तथा विंशतिकुलीं विंशतिं कुलानि मध्यमानि, चत्वारिंशत्कुलीं वा चत्वारिंशतं कुलानि वाधमानि, चिन्तयेत् । स गोपः, तस्यां दशकुल्यां विंशतिकुल्यां चत्वारिंशत्कुल्यां वा स्वचिन्ताविषयभूतायां, स्त्रीपुरुषाणां स्त्रीणां पुरुषाणां च, जातिगोत्रनामकर्मभिः, जङ्घाग्रं जङ्घाशब्देन पादचारिजनो लक्ष्यते तेन जनसंख्यामित्यर्थः, आयव्ययौ च, विद्यात् ।

स्थानिकस्य चिन्तनीयमाह—एवमिति । एवं यथा गोपो दशकुलीप्रभृतिं तद्गतस्त्रीपुरुषजङ्घाग्रायव्ययज्ञानपूर्वं चिन्तयेत् तद्वत्, दुर्गचतुर्भागं स्थानिकः चिन्तयेद् दुर्गचतुर्भागगतस्त्रीपुरुषजङ्घाग्रायव्ययज्ञानपूर्वं तन्त्रयेत्, दुर्गचतुर्भागचिन्तकश्चायं स्थानिकाख्यः ।

धर्मावसथिन इति । धर्मावसथाः धर्मशालाः तदधिकारिणो धर्मावसथिनः, पाषण्डपथिकान् पाशुपतशाक्यभिक्षुकादीन् अध्वगान्, आवेद्य गोपाय निवेद्य, वासयेयुः धर्मावसथेषु । स्वप्रत्ययांश्च स्वकृतः स्वयं विचार्य कृतः प्रत्ययः तपस्विश्रोत्रियविश्वासो येषां ते तथाभूताः सन्तः, तपस्विनस्तापसान्, श्रोत्रियान्

कारुशिल्पिनः स्वकर्मस्थानेषु स्वजनं वासयेयुः। वैदेहकाश्चान्योन्यं स्वकर्मस्थानेषु। पण्यानामदेशकालविक्रेतारमस्वकरणं च निवेदयेयुः।

शौण्डिकपाक्वमांसिकौदनिकरूपाजीवाः परिज्ञातमावासयेयुः। अतिव्ययकर्तारमत्याहितकर्माणं च निवेदयेयुः।

चिकित्सकः प्रच्छन्नव्रणप्रतीकारकारयितारमपथ्यकारिणं च गृहस्वामी च निवेद्य गोपस्थानिकयोर्मुच्यते। अन्यथा तुल्यदोषः स्यात्।

---

छान्दसांश्च, वासयेयुरिति वर्तते। स्वप्रत्ययत्ववचनं तद्वासननिमित्तस्य दोषस्य स्वगामित्वद्योतनार्थम्।

कारुशिल्पिन इति। कारवः शिल्पिनश्च, स्वकर्मस्थानेषु स्वजनं वासयेयुः, स्वप्रत्ययाः। वैदेहकाश्च वणिजश्च, स्वप्रत्ययाः, अन्योन्यं स्वकर्मस्थानेषु तत्पण्यवणिक् तत्पण्यवणिजमिति न्यायमनपहाय पण्यव्यवहारस्थानेषु, वासयेयुः। पण्यानाम्, अदेशकालविक्रेतारम् अदेशे अकाले च विक्रयकर्तारम् आगन्तुकं, निवेदयेयुः, नागरिकाय। अस्वकरणं च अस्वीयस्य पण्यस्य व्यवहरणं च, निवेदयेयुः।

शौण्डिकेत्यादि। शौण्डिकाः मद्यविक्रयिणः पाक्वमांसिकाः पक्वमांसविक्रयिणः औदनिका अन्नविक्रयिणः रूपाजीवाः वेश्याश्च, परिज्ञातं समानशीलादिद्वारेण विदितं, आवासयेयुः। पुनः किं कुर्युः, अतिव्ययकर्तारम्, अतिव्ययस्य विज्ञातायत्यभ्यधिकस्याविज्ञातायतिकस्य वा व्ययस्य कर्तारम्, अत्याहितकर्माणं च अतिमात्रारब्धमद्यपानादिकर्माणं च निवेदयेयुः, गोपस्थानिकेभ्यः।

चिकित्सक इति। भिषक्, प्रच्छन्नव्रणप्रतीकारकारयितारं प्रच्छन्नं स्वकृतापराधोद्भेदभयादन्याविदितं यथा भवति तथा व्रणानां शस्त्राद्युत्पादितानां प्रतीकारस्य चिकित्सायाः कारयितारम्, अपथ्यकारिणं च अपथ्यानि रोगमरणोत्पादकानि द्रव्याणि करोति सम्पादयत्यन्विष्यति वेत्यपथ्यकारी तं च, निवेद्य गोपस्थानिकयोः, मुच्येत शुध्येत्। अन्यथा अनिवेदने, तुल्यदोषः स्याद् अपराधिभ्यां समानदोषो गण्येतेत्यर्थः। तथा गृहस्वामी च यस्मिन् गृहे व्रणप्रतीकारयित्रपथ्यकारिणोरनुष्ठानं तद्गृहपतिश्च, निवेद्य गोपस्थानिकयोर्मुच्येतान्यथा तुल्यदोषः स्यात्।

प्रस्थितागतौ च निवेदयेत्। अन्यथा रात्रिदोषं भजेत। क्षेमरात्रिषु त्रिपणं दद्यात्।

पथिकोत्पथिकाश्च बहिरन्तश्च नगरस्य देवगृहपुण्यस्थानवनश्मशानेषु सव्रणमनिष्टोपकरणमुद्भाण्डीकृतमाविग्नमतिस्वप्नमध्वक्लान्तमपूर्वं वा गृह्णीयुः।

एवमभ्यन्तरे शून्यनिवेशावेशनशौण्डिकौदनिकपाक्वमांसिकद्यूतपाषण्डावासेषु विचयं कुर्युः।

अग्निप्रतीकारं च ग्रीष्मे मध्यमयोरह्नश्चतुर्भागयोः। अष्टभागोऽग्निदण्डः। बहिरधिश्रयणं वा कुर्युः।

---

प्रस्थितागतौ चेति। प्रस्थितः स्वगृहात् कार्यान्तरेण देशान्तरं प्रस्थितः आगतः देशान्तरात् कार्यान्तरेण स्वगृहं प्राप्तः तौ च, निवेदयेत् प्रस्थानागमनकालप्रयोजनाद्याख्यानपूर्वमावेदयेत्, अर्थाद् गृहस्वामी। अन्यथा निवेदनाभावे, रात्रिदोषं भजेत रात्रौ ताभ्यां कृतस्य चौर्यादिलक्षणस्य दोषस्य भागी भवेत्। क्षेमरात्रिषु क्षेमयुक्तासु अनुपजातचौर्यासु अनिवेदनरात्रिषु, त्रिपणं पणत्रयात्मकमनिवेदनापराधदण्डं, दद्यात्। क्षेमेऽपि दण्डविधानं निवेदनानुष्ठानस्य कदाप्यव्यभिचारार्थम्।

पथिकेत्यादि। पथिकोत्पथिकाश्च पथिका महामार्गचारिणो वैदेहकादिव्यञ्जनाः उत्पथिका विवीतपथचारिणः काष्ठतृणादिहारकगोपालकादिव्यञ्जनाः त उभये सञ्चाराः, बहिरन्तश्च नगरस्य विद्यमानेषु, देवगृहादिषु चतुर्षु स्थानेषु, सव्रणं शस्त्राद्युत्पादितव्रणम्, अनिष्टोपकरणम् अनिष्टानि वर्जनीयान्युपकरणानि काकल्यादीनि चोरादिसाधनानि यस्य तम्, उद्भाण्डीकृतं समधिकभाण्डभारवाहिनम्, आविग्नं भीतम्, अतिस्वप्नं रात्रिव्यायामजागरवैशादतिमात्रनिद्रापन्नम्, अध्वक्लान्तं दीर्घाध्वसञ्चारश्रान्तम्, अपूर्वं वा अज्ञातपूर्वं वा, गृह्णीयुः, अर्थान्नागरिकाय चार्पयेयुः।

एवमिति। अनेन प्रकारेण, अभ्यन्तरे स्थानीयान्तराले, शून्यनिवेशादिषु शून्यनिवेशे शून्यालये आवेशने शिल्पशालायां शौण्डिकावासे औदनिकावासे पाक्वमांसिकावासे द्यूतावासे पाषण्डावासे चेत्येवं सप्तसु, विचयं सव्रणाद्यन्वेषणं कुर्युः, अर्थाद् गूढपुरुषा नागरिकादिसम्बन्धिनः।

अग्नीत्यादि। कुर्युरित्यनुवर्तते। अग्निप्रतिषेधं च अग्निकार्याणां महताम्

**पादः पञ्चघटीनाम् । कुम्भद्रोणीनिःश्रेणीपरशुशूर्पाङ्कुशकचग्रहणीदृतीनां चाकरणे ।**

**तृणकटच्छन्नान्यपनयेत् । अग्निजीविन एकस्थान् वासयेत् । स्वगृहप्रद्वारेषु गृहस्वामिनो वसेयुरसम्पातिनो रात्रौ । रथ्यासु कुटव्रजाः सहस्रं तिष्ठेयुः, चतुष्पथद्वारराजपरिग्रहेषु च ।**

---

अग्न्यतिप्रज्वलनबहुलस्फुलिङ्गोद्गतिहेतूनां वारणं च कुर्युः । कदा, ग्रीष्मे ग्रीष्मर्तौ, तत्रापि न सर्वदा किन्तु मध्यमयोरह्नश्चतुर्भागयोः दिवससम्बन्धिनोः द्वितीयतृतीययामयोः । तृणपर्णादिमयपटलावृतगृहविषयश्चायं प्रतिषेधः । निषिद्धकारिणां दण्डमाह—**अष्टभाग** इति । पणाष्टभागः, अग्निदण्डः निषिद्धकालाग्निकार्यकरणनिमित्तो दण्डः । अग्निकार्यस्य पाकार्थस्थाल्यधिश्रयणस्य तदानीमवर्जनीयत्वे त्वाह — **बहिरिति** । बहिरधिश्रयणं वा पटलानावृतावकाशाधिश्रयणं वा, कुर्युः ।

अग्निकार्यकरणस्य घटिकाविशेषसम्बन्धे दण्डविशेषमाह — **पाद** इति । पादः पणचतुर्भागदण्डः, पञ्चघटीनां द्वितीयतृतीययाममध्यमपञ्चघटिकानां सार्धद्वादशघटिकात ऊर्ध्वम् आ सार्धसप्तदशघटिकात इत्यर्थः । कुम्भद्रोण्यादीनां चाकरणे कुम्भो घटो जलपूर्णः द्रोणी दारुमयो जलाधारो जलपूर्णः निःश्रेणी अधिरोहणी उच्चदेशारोहणार्था परशुः कुठारो दार्वादिच्छेदनार्थः शूर्पं प्रस्फोटनं प्रतिमुखधूमप्रसरवारणार्थम् अङ्कुशं सृणिर्दह्यमानवस्त्वाकर्षणार्थः कचग्रहणी शालापटलतृणहरणसाधनं दृतिश्चर्ममयमुदकपात्रम् इत्येतेषामग्निनिर्वापणसाधनानां ग्रीष्मकाले गृहद्वारेष्वनिवेशने, पाद इत्यनुवर्तते पणचतुर्भागो दण्डः ।

**तृणकटच्छन्नान्यपनयेदिति** । तृणकटमयच्छदींषि गृहाणि, अपनयेद् निरस्येद् ग्रीष्मे । अग्निजीविनः अयस्कारताम्रतक्षादीन्, एकस्थान् वासयेत् एकस्मिन् महति चतुश्शाले कृताग्निभयप्रतिविधाने वासयित्वा कर्म कारयेत् । **स्वगृहेत्यादि** । स्वगृहप्रद्वारेषु स्वगृहमुखद्वारेषु, गृहस्वामिनो वसेयुः । कथम्भूताः, असम्पातिनो रात्रौ निशायामन्यत्र सञ्चारं वर्जयन्तः । रथ्यासु विशिखासु, कुटव्रजाः सजलाः कुम्भपङ्क्तयः, सहस्रं तिष्ठेयुः । चतुष्पथद्वारराजपरिग्रहेषु च चतुष्पथेषु शृङ्गाटकेषु द्वारेषु नगरादिद्वारेषु राजपरिग्रहेषु कोशगृहकुप्यगृहकोष्ठागारपण्यगृहगजाश्वशालादिषु च, कुटव्रजास्तिष्ठेयुः ।

**प्रदीप्तमनभिधावतो गृहस्वामिनो द्वादशपणो दण्डः । षट्पणोऽवक्रयिणः । प्रमादाद् दीप्तेषु चतुष्पञ्चाशत्पणो दण्डः ।**

**प्रादीपिकोऽग्निना वध्यः ।**

**पांसुन्यासे रथ्यायामष्टभागो दण्डः। पङ्कोदकसन्निरोधे पादः । राजमार्गे द्विगुणः ।**

**पुण्यस्थानोदकस्थानदेवगृहराजपरिग्रहेषु पणोत्तरा विष्ठादण्डाः । मूत्रेष्वर्धदण्डाः ।**

**भैषज्यव्याधिभयनिमित्तमदण्ड्याः ।**

---

**प्रदीप्तमिति** । प्रदीप्तम् अनभिधावतः प्रज्वलिताग्निकं किमपि गृहं दृष्ट्वाप्यनभिद्रवतः, गृहस्वामिनः, द्वादशपणो दण्डः भवति । षट्पणोऽवक्रयिणः भाटकेन गृहे वसतोऽनभिधावतो गृहस्वाम्युक्तदण्डार्धदण्डः । **प्रमादादिति**। प्रमादाद् अनवधानाद्, दीप्तेषु सत्सु अर्थात् स्वगृहेष्वपि, चतुष्पञ्चाशत्पणो दण्डः । स गृहारक्षकस्येत्येके ।

**प्रादीपिक** इति । प्रदीपिका वह्निना गृहसन्दीपनं तत्कर्ता, अग्निना तद्दीपितेनैव, वध्यः तदैव गृहीतश्चेत् । कालान्तरगृहीतस्याप्यग्निदाहः कण्टकशोधने वक्ष्यते — 'विवीतक्षेत्रखलवेश्मद्रव्यहस्तिवनादीपकमग्निना दाहयेदि'ति ।

**पांस्वित्यादि** । रथ्यायां रथशकटादिसञ्चारमार्गे, पांसुन्यासे पांसूनां धूलीनां तज्जातीयानामवकराणां च निक्षेपे, अष्टभागः पणाष्टमांशः, दण्डः । तत्रैव पङ्कोदकसन्निरोधे पङ्कमिश्रजलावरोधने, पादः पादपणदण्डः । राजमार्गे महामार्गे, द्विगुणः पांसुन्यासे पङ्कोदकसन्निरोधे च रथ्योक्तद्विगुणः पादपणात्मकोऽर्धपणात्मकश्च क्रमेण दण्डः ।

**पुण्येत्यादि** । राजमार्ग इत्यनुवर्तते तत्र, पुण्यस्थानादिषु चतुर्षु च, पणोत्तरा उत्तरोत्तरैकैकपणाधिकाः राजमार्गे एकपणः पुण्यस्थाने द्विपणः उदकस्थाने तटाकादौ त्रिपणः देवगृहे चतुष्पणः राजपरिग्रहे राजगृहकोशागारादौ पञ्चपण इत्येवमात्मकाः, विष्ठादण्डाः । मूत्रेषु उक्तेष्वेव प्रदेशेषु मूत्रविसर्जने, अर्धदण्डाः क्रमाद् अर्धपणैकपणसार्धपणद्विपणार्धतृतीयपणात्मका दण्डाः ।

**भैषज्यव्याधिभयनिमित्तमदण्ड्या** इति । भैषज्यं विरेचनद्रव्यसेवनं व्याधिरतिसारप्रमेहादि भयं प्रसिद्धम् एतन्निमित्तकं चेद् विष्ठामूत्रकरणं राजमार्गादौ, तर्हि दण्ड्या न भवन्ति ।

**मार्जारश्वनकुलसर्पप्रेतानां नगरस्यान्तरुत्सर्गे त्रिपणो दण्डः। खरोष्ट्राश्वतराश्वपशुप्रेतानां षट्पणः। मनुष्यप्रेतानां पञ्चाशत्पणः।**

**मार्गविपर्यासे शवद्वारादन्यतः शवनिर्णयने पूर्वः साहसदण्डः। द्वाःस्थानां द्विशतम्। श्मशानादन्यत्र न्यासे दहने च द्वादशपणो दण्डः।**

**विषण्नालिकमुभयतोरात्रं यामतूर्यम्। तूर्यशब्दे राज्ञो गृहाभ्याशे सपादपणमक्षणताडनम् प्रथमपश्चिमयामिकम्। मध्यमयामिकं द्विगुणम्। बहिश्चतुर्गुणम्।**

---

मार्जारेत्यादिवाक्यत्रयमतिरोहितार्थम्।

मार्गेत्यादि। मार्गविपर्यासे प्रसिद्धमार्गादन्येन मार्गेण शवानां नयने, शवद्वारादन्यतः शवनिर्णयने व्यवस्थितप्रेतनिर्हरणद्वारातिरिक्तद्वारेण प्रेतनिर्हरणे, पूर्वः साहसदण्डः। द्वाःस्थानां द्वाररक्षिणां द्वारान्तरनिर्णयनमप्रतिषेधतां, द्विशतं पणद्विशतदण्डः। श्मशानादित्यादि। न्यासे स्थापने, स च बालानाथादीनाम्। शेषं स्पष्टम्।

विषण्नालिकमिति। यामतूर्यं यामे यन्त्रणीयजनसञ्चारे प्रहरे भवं तूर्यं तत्सञ्चारनिरोधसूचकं वाद्यघोषणं यामतूर्यं, तत्, उभयतोरात्रं रात्रेरुभयोः पार्श्वयोः, अर्थात् प्रथमपश्चिमयामयोः कर्तव्यमिति शेषः। तत्रापि घटिकानियमार्थमाह — विषण्नालिकं विवर्जिताः षट् नालिकाः रात्रिपूर्वपश्चिमभागसंबन्धिन्यो यस्मिंस्तद् यथा भवति तथा, रात्रेरादितः षट्सु घटिकास्वतीतासु अन्ततश्च षट्सु घटिकास्ववशिष्टास्वित्यर्थः। इह उभयतोरात्रमिति रात्रिमुभयत इत्यर्थेऽव्ययीभावः समासान्तश्चार्षः। तूर्यशब्द इति। श्रूयमाणे, राज्ञो, गृहाभ्याशे गृहसमीपे सञ्चरतामिति शेषः, सपादपणम् अक्षणताडनं पादाधिकपणोऽकालसञ्चारदण्डः भवति। तच्चाक्षणसञ्चारदण्डनं किं सर्वरात्रियामविषयं, नेत्याह—प्रथमपश्चिमयामिकं प्रथमयामशेषसञ्चारविषयं पश्चिमयामशेषसञ्चारविषयं चेत्यर्थः। द्वितीयतृतीययामसञ्चारविषयमाह—मध्यमेत्यादि। मध्यमयामिकम् अक्षणताडनं, द्विगुणम् अर्धतृतीयपणम्। इदं सर्वं नगरान्तःसञ्चारविषयं, नगरबहिर्देशसञ्चारविषयमाह — बहिरिति। बहिर्नगराद् बहिर्नगरपरिसरदेशे, चतुर्गुणं राजगृहाभ्याशसञ्चारोक्तदण्डचतुर्गुणम् अर्थात् पञ्चपणात्मकम् अक्षणताडनं भवति।

**शङ्कनीये देशे लिङ्गे पूर्वापदाने च गृहीतमनुयुञ्जीत ।**

**राजपरिग्रहोपगमने नगररक्षारोहणे च मध्यमः साहसदण्डः ।**

**सूतिकाचिकित्सकप्रेतप्रदीपयाननागरिकतूर्यप्रेक्षाग्निनिमित्तं मुद्राभिश्चाग्राह्याः ।**

**चाररात्रिषु प्रच्छन्नविपरीतवेषाः प्रव्रजिता दण्डशस्त्रहस्ताश्च मनुष्या दोषतो दण्ड्याः ।**

---

**शङ्कनीय** इति । शङ्क्यतेऽस्मिन् स्थितं पुरुषं चोरजारादित्वेनेति शङ्कनीयः तथाभूते सति, देशे निष्कुटादौ, शङ्कनीये लिङ्गे अवगुण्ठनकुड्यच्छायानिलयनादिके सति, पूर्वापदाने च पूर्वकृते चौर्यादिवृत्ते च प्रतीते सति, गृहीतम् अनुयुञ्जीत तद्देशस्थं तल्लिङ्गिनं तदपदानकं च जनं दृष्टं गृहीत्वा पृच्छेत् — कस्त्वं कुतः कस्य किमर्थमिहागतोऽसीति ।

**राजपरिग्रहोपगमन** इति । राजकीयावसथोद्यानादिष्वननुमतस्य प्रवेशने, नगररक्षारोहणे च नगररक्षाणां प्राकाराट्टालकादीनामारोहणे च, मध्यमः साहसदण्डः ।

**सूतिकेत्यादि** । सूतिकादिसप्तकनिमित्तं सूतिका प्रसूता तत्पदेन तच्छुश्रूषणं लक्ष्यते । सूतिकानिमित्तं सूतिकाशुश्रूषणे निमित्ते चिकित्सकनिमित्तं चिकित्सकपरिचरणे निमित्ते प्रेतनिमित्तं शवनिर्हरणे निमित्ते प्रदीपयाननिमित्तं दीपेनात्मानं प्रकाश्य गमने निमित्ते नागरिकतूर्यनिमित्तं नागरजनसमूहनाचिह्नतूर्यवादने निमित्ते प्रेक्षानिमित्तं राजानुज्ञातनाटकादिप्रयोगदर्शने निमित्ते अग्निनिमित्तं च स्वपरगृहाद्यग्निदीपने निमित्ते च अग्निग्रहणस्योपलक्षणार्थत्वादन्यस्मिन्नपि भयहेतौ निमित्ते, अग्राह्याः अक्षणसञ्चारिणो न ग्राह्याः । किन्तु निमित्तं परीक्ष्य मोक्तव्या इत्यर्थः । तथा मुद्राभिश्चाग्राह्याः मन्त्रिनागरिकादिमुद्रोपेताश्चाक्षणचारिणो न ग्राह्याः ।

**चाररात्रिष्विति** । चारः सर्वसञ्चारः तत्सम्बन्धिनीषु रात्रिषु अनुमतसर्वसञ्चारासु महोत्सवादिरात्रिष्वित्यर्थः, प्रच्छन्नविपरीतवेषाः प्रच्छन्ना अवगुण्ठनादिसंवृतस्वरूपाः विपरीतवेषाः पुंवेषाः स्त्रियः स्त्रीवेषाः पुरुषाश्च राजाज्ञानिष्कासिताः, प्रव्रजिताः परिव्राजकाः, दण्डशस्त्रहस्ताश्च दण्डपाणयः शस्त्रपाणयश्च, मनुष्याः, दोषतो दण्ड्याः परीक्ष्य यथादोषोपलम्भं दण्डनीयाः ।

रक्षिणामवार्यं वारयतां वार्यं चावारयतामक्षणद्विगुणो दण्डः । स्त्रियं दासीमधिमेहयतां पूर्वः साहसदण्डः, अदासीं मध्यमः, कृतावरोधामुत्तमः, कुलस्त्रियं वधः ।

चेतनाचेतनिकं रात्रिदोषमशंसतो नागरिकस्य दोषानुरूपो दण्डः, प्रमादस्थाने च ।

नित्यमुदकस्थानमार्गभूमिच्छन्नपथवप्रप्राकाररक्षावेक्षणं, नष्टप्रस्मृतापसृतानां च रक्षणम् ।

बन्धनागारे च बालवृद्धव्याधितानाथानां जातनक्षत्रपौर्णमासीषु विसर्गः । पुण्यशीलाः समयानुबद्धा वा दोषनिष्क्रयं दद्युः ।

---

रक्षिणामिति । अवार्यम् अभ्यनुज्ञाताक्षणसञ्चारं सूतिकाशुश्रूषुप्रभृतिं, वारयतां, वार्यं च सामान्यजनम्, अवारयतां, रक्षिणां नागरिकपुरुषाणाम्, अक्षणद्विगुणः अक्षणसञ्चारविहितदण्डद्विगुणः सार्धपणद्वयात्मकः, दण्डः । स्त्रियं दासीम् अन्यदीयाम्, अधिमेहयतां बलाद् गच्छतां रक्षिणां, पूर्वः साहसदण्डः । अदासीं गणिकाम् अधिमेहयतां, मध्यमः साहसदण्डः । कृतावरोधां दासीमदासीं वा केनचिद् भार्यात्वेन परिगृहीताम्, अधिमेहयताम्, उत्तमः साहसदण्डः । कुलस्त्रियम्, अधिमेहयतां, वधः प्राणवियोजनं दण्डः ।

चेतनाचेतनिकमिति । चेतनभवमचेतनभवं च, रात्रिदोषं रात्रिदृष्टममङ्गलम्, अशंसतः अनिवेदयतः, नागरिकस्य पौरस्य, दोषानुरूपो दण्डः कल्प्यः । प्रमादस्थाने च प्रमादो रक्षिपुरुषाणां रक्षाव्यापारशैथिल्यं तस्य स्थाने, हेतुभूते मद्यपानादौ च, दोषानुरूपो दण्डः ।

नित्यमिति । उदकस्थानानि नदीकूपतटाकादीनि, मार्गाः प्रवेशनिर्गमद्वाराणि, भूमयः स्थलानि, छन्नपथाः सुरुङ्गादिमार्गाः, वप्राः प्राकाराधाराः, प्राकारा वरणाः, रक्षाः अट्टालकपरिखादयः, एषामुदकस्थानादीनां सप्तपदार्थानामवेक्षणं परीक्षणं, नित्यं प्रतिदिवसानुष्ठेयं कर्म भवति नागरिकस्य । नष्टप्रस्मृतापसृतानां च नष्टानां स्वामिप्रमादगलितानां भूषणादीनां प्रस्मृतानां स्वामिविस्मृतानाम् अपसृतानां स्वयमपगतानां द्विपदचतुष्पदानां च, रक्षणं, नित्यं नियतानुष्ठेयम् आ स्वामिदर्शनात् ।

बन्धनागारे चेति । कारागृहे च स्थितानां, बालादीनां चतुर्णां, जातनक्षत्रपौर्णमासीषु राज्ञो वार्षिकजन्मर्क्षोत्सवेषु पूर्णिमासु च, विसर्गः बन्धनगृहाद् मोक्षणं, कर्तव्यमिति शेषः । पुण्येत्यादि । पुण्यशीलाः धर्माचरणस्व-

दिवसे पञ्चरात्रे वा बन्धनस्थान् विशोधयेत् ।
कर्मणा कायदण्डेन हिरण्यानुग्रहेण वा ॥
अपूर्वदेशाधिगमे युवराजाभिषेचने ।
पुत्रजन्मनि वा मोक्षो बन्धनस्य विधीयते ॥

इति कौटलीयार्थशास्त्रे अध्यक्षप्रचारे द्वितीयाधिकरणे षट्त्रिंशोऽध्यायः
नागरिकप्रणिधिः । आदितः सप्तपञ्चाशः ॥
**एतावता कौटलीयस्यार्थशास्त्रस्याध्यक्षप्रचारो**
**द्वितीयमधिकरणं समाप्तम् ॥**

---

भावाः कुतोऽपि यादृच्छिकाद् वृत्तव्यतिक्रमात् प्रसक्तकारागृहप्रवेशा इत्यर्थः, समयानुबद्धा दोषनिष्क्रयं दद्युः समयेन आयतिविशुद्धिप्रातिभाव्यसंविदा प्रतिबद्धाः कृतदोषानुरूपं हिरण्यदण्डं दद्युः, बन्धनगृहे प्रवेशाभावाय । तदिदं बन्धनगृहप्रवेशनपक्षप्रतिक्षेपकं पक्षान्तरं वाशब्दो द्योतयति ।

अध्यायान्ते श्लोकावाह—**दिवस** इति । दिवसे प्रतिदिवसं, पञ्चरात्रे वा प्रतिपञ्चरात्रं वा, बन्धनस्थान्, विशोधयेत् विशोधनं दण्डग्रहणेन दोषनिष्क्रयं कारयेत् । कथं, कर्मणा भारवहनशकटाकर्षणादिना दण्डदानासामर्थ्ये, कायदण्डेन शरीरताडनादिना कर्मकरणासौकर्ये, हिरण्यानुग्रहेण वा हिरण्यग्रहणरूपेणानुग्रहेण वा बन्धनस्थगुणित्वे । इह केचिद् 'विशोधयेदि'-त्यस्यावृत्त्या 'बन्धनगतान् विशोधयेत् सुस्था दुःस्था वेति परीक्षेते'त्यर्थान्तरमपि संगृह्णन्ति ॥

बद्धमोक्षनिमित्तान्याह — **अपूर्वे**त्यादि । अपूर्वदेशाधिगमे शत्रुजयनिमित्ते नूतनदेशलाभे । शेषं सुगमम् ॥

व्याख्यायामर्थशास्त्रस्य श्रीमूलाख्यानभाजने ।
आध्यक्ष्याख्याधिकरणं द्वैतीयीकमपूर्यत ॥

इति श्री**वञ्चिमण्डलमहाराजा**श्रितस्य ताम्रपर्णीतीरवर्ति**तरुवाग्रहारा**भिजनस्य
श्री**सीताम्बाश्रीरामसुब्रह्मण्यार्य**सूनोर्महामहोपाध्याय**गणपतिशास्त्रिणः**
कृतिषु कौटलीयार्थशास्त्रव्याख्यायां **श्रीमूला**ख्यायाम् अध्यक्षप्रचारे
द्वितीयाधिकरणे षट्त्रिंशोऽध्यायः नागरिकप्रणिधिः ।
अध्यक्षप्रचारो द्वितीयमधिकरणं समाप्तम् ॥

---

**प्रथमसम्पुटः समाप्तः ।**

**शुभं भूयात् ।**

# शुद्धिपत्रम् ।

| पृष्ठम्. | पङ्क्तिः. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| १७ | २४ | च | वा |
| ५६ | २० | वन्तिभ | भवन्ति |
| ६६ | १८ | ण | णे |
| ,, | १९ | या | यो |
| ३१३ | २७ | त्र धे | त्र पष्ठौहीं भारवहनसमर्था धे |
| ३२० | २५ | नी, ह | नी ह |
| ३५८ | ८ | मप्तास् | माप्तम् |

# READY FOR SALE.

| | RS. | AS. | P. |
|---|---|---|---|
| भक्तिमञ्जरी (Stuti) by H. H. Svâti Srî Râma Varma Mahârâjah. | 1 | 0 | ( |
| स्यानन्दूरपुरवर्णनप्रबन्धः (Kavya) Syânandûrapuravarnanaprabandha by H. H. Svâti Sri Râma Varma Mahârâjah, with the commentary Sundarī of Râjarâja Varma Koil Tampurân. | 2 | 0 | 0 |

## Trivandrum Sanskrit Series.

| | RS. | AS. | P. |
|---|---|---|---|
| No. 1—दैवम् (Vyâkarana) by Deva with Purushakâra of Krishnalilâsukamuni. | 1 | 0 | 0 |
| No. 2—अभिनवकौस्तुभमाला-दक्षिणामूर्तिस्तवौ by Krishnalilâsukamuni. | 0 | 2 | 0 |
| No. 3—नलाभ्युदयः (Kâvya) by Vâmana Bhatta Bâna (Second Edition). | 0 | 4 | 0 |
| No. 4—शिवलीलार्णवः (Kâvya) by Nîlakantha Dikshita. | 2 | 0 | 0 |
| No. 5—व्यक्तिविवेकः (Alankâra) by Mahima Bhatta with commentary | 2 | 12 | 0 |
| No. 6—दुर्घटवृत्तिः (Vyâkarana) by Saranadeva. | 2 | 0 | 0 |
| No. 7—ब्रह्मतत्त्वप्रकाशिका (Vedânta) by Sadâsivendra Sarasvatî | 2 | 4 | 0 |
| No. 8—प्रद्युम्नाभ्युदयम् (Nâtaka) by Ravi Varma Bhûpa. | 1 | 0 | C |
| No. 9—विरूपाक्षपञ्चाशिका (Vedânta) by Virûpâkshanâtha with the commentary of Vidyâchakravartin. | 0 | 8 | 0 |
| No. 10—मातङ्गलीला (Gajalakshana) by Nîlakantha. | 0 | 8 | 0 |
| No. 11—तपतीसंवरणम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma | 2 | 4 | 0 |
| No. 12—परमार्थसारम् (Vedânta) by Bhagavad Âdisesha with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No. 13—सुभद्राधनञ्जयम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma. | 2 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 14—नीतिसारः (Niti) by Kâmandaka, with the commentary of Sankarârya. | 3 | 8 | 0 |
| No. 15—स्वप्नवासवदत्तम् (Nâtaka) by Bhâsa. (Second Edition). | 1 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् Do. Do. | 1 | 0 | 0 |
| No. 18—नारायणीयम् (Stuti) by Nârâyana Bhatta with the commentary of Desamangala Vârya. | 4 | 0 | 0 |
| No. 19—मानमेयोदयः (Mîmâmsâ) by Nârâyana Bhatta and Nârâyana Pandita. | 1 | 4 | 0 |
| No. 20—अविमारकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 21—बालचरितम् Do. Do. | 1 | 0 | 0 |
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part I. 1st & 2nd Kândas). | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः (Kâvya) by Chakra kavi. | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका (Nyâya) by Gangâdharasûri. | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part I. 1st & 2nd Sargas). | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः (Dharmasûtra) by Vikhanas. | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part II. 3rd Kânda). | 2 | 4 | 0 |
| No. 30—वास्तुविद्या (Silpa). | 0 | 12 | 0 |
| No. 31—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part III. 4th, 5th & 6th Kândas). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 32—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part II, 3rd, 4th & 5th Sargas) | 2 | 8 | 0 |
| No. 33—वाररुचसंग्रहः (Vyákarana) with the commentary Dipaprabhâ of Nârâyana. | 0 | 8 | 0 |
| No. 34—मणिदर्पणः (शब्दपरिच्छेदः) (Nyâya) by Râja chûdâmanimakhin. | 1 | 4 | 0 |
| No. 35—मणिसारः (अनुमानखण्डः) (Nyâya) by Gopînâtha. | 1 | 8 | 0 |
| No. 36—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part III. 6th, 7th & 8th Sargas). | 3 | 0 | 0 |
| No. 37—आशौचाष्टकम् (Smriti) by Vararuchi with commentary. | 0 | 4 | 0 |
| No. 38—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tîkâsarvasva of Vandyaghatîya Sarvânanda (Part I. 1st Kânda). | 2 | 0 | 0 |
| No. 39—चारुदत्तम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 40—अलङ्कारसूत्रम् (Alankâra) by Râjânaka Srî Ruyyaka with the Alankârasarvaswa of Sri Mankhuka and its commentary by Samudrabandha. | 2 | 8 | 0 |
| No. 41—अध्यात्मपटलम् (Kalpa) by Âpastamba with Vivarana of Srî Sankara Bhagavat Pâda. | 0 | 4 | 0 |
| No. 42—प्रतिमानाटकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 43—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghâtana of Kshîraswamin and Tîkâsarvaswa of Vandyaghatîya Sarvânanda (Part II. 2nd Kânda 1—6 Vargas). | 2 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 44—तन्त्रशुद्धम् (Tantra) by Bhattâraka Sri Vedottama. | 0 | 4 | 0 |
| No. 45—प्रपञ्चहृदयम् (Prapanchahridaya). | 1 | 0 | 0 |
| No. 46—परिभाषावृत्तिः (Vyâkarana) by Nîlakantha Dîkshita. | 0 | 8 | 0 |
| No. 47—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Srî Krishnânanda Sarasvatî. (Part I.) | 1 | 12 | 0 |
| No. 48— Do. Do. (Part II.) | 2 | 0 | 0 |
| No. 49—गोलदीपिका (Jyotisha) by Parameswara. | 0 | 4 | 0 |
| No. 50—रसार्णवसुधाकरः (Alankâra) by Singa Bhûpâla. | 3 | 0 | 0 |
| No. 51—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghâtana of Kshîraswâmin and Tîkâsarvaswa of Vandyaghatîya Sarvânanda (Part III. 2nd Kânda 7—10 Vargas) | 2 | 0 | 0 |
| No. 52—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tîkâsarvaswa of Vandyaghatîya Sarvânanda (Part IV. 3rd Kânda) | 1 | 8 | 0 |
| No. 53—शब्दनिर्णयः (Vedânta) by Prakâsâtmayatîndra | 0 | 12 | 0 |
| No. 54—स्फोटसिद्धिन्यायविचारः (Vyâkarana) | 0 | 4 | 0 |
| No. 55—मत्तविलासप्रहसनम् (Nâtaka) by Sri Mahendravikramavarman. | 0 | 8 | 0 |
| No. 56—मनुष्यालयचन्द्रिका (Silpa). | 0 | 8 | 0 |
| No. 57—रघुवीरचरितम् (Kâvya). | 1 | 4 | 0 |
| No. 58—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Srî Krishnânanda Saraswatî (Part III.) | 2 | 0 | 0 |
| No. 59—नागानन्दम् (Nâtaka) by Srîharshadeva with the commentary Nâgânandavimarsinî of Sivarâma. | 3 | 4 | 0 |
| No. 60—लघुस्तुतिः (Stuti) by Srî Laghubhattâraka with the commentary of Srî Râghavânanda | 0 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 61—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Sri Krishnânanda Sarasvati (Part IV.) | 1 | 8 | 0 |
| No. 62—सर्वमतसंग्रहः (Sarvamatasangraha). | 0 | 8 | 0 |
| No. 63—किरातार्जुनीयम् (Kâvya) by Bharavi with the commentary Sabdârthadîpika of Chitrabhanu (1, 2 and 3 Sargas). | 2 | 8 | 0 |
| No. 64—मेघसन्देशः (Kâvya) by Kâlidasa with the commentary Pradîpa of Dakshinâvartanatha. | 1 | 0 | 0 |
| No. 65—मयमतम् (Silpa) by Mayamuni. | 3 | 8 | 0 |
| No. 66— महार्थमञ्जरी (Darsana) with the commentary Parimala of Maheswarânanda. | 2 | 8 | 0 |
| No 67—तन्त्रसमुच्चयः (Tantra) by Nârâyana with the commentary Vimarsini of Sankara. (Part I. 1–6 Patalas) | 3 | 4 | 0 |
| No. 68—तत्त्वप्रकाशः (Agama) by Sri Bhojadeva with the commentary Tâtparyadîpikâ of Sri Kumara. | 2 | 0 | 0 |
| No. 69—ईशानशिवगुरुदेवपद्धतिः (Tantra) by Isânasivagurudevamisra (Part I. Sâmânyapâda). | 1 | 8 | 0 |
| No. 70—आर्यमञ्जुश्रीमूलकल्पः (Part I). | 2 | 8 | 0 |
| No. 71— तन्त्रसमुच्चयः (Tantra) by Nârâyana with the commentary Vimarsini of Sankara (Part II. 7—12 Patalas). | 3 | 8 | 0 |
| No. 72— ईशानशिवगुरुदेवपद्धतिः (Tantra) by Isânasivagurudevamisra (Part II. Mantrapada) | 4 | 0 | 0 |
| No. 73 — ईश्वरप्रतिपत्तिप्रकाशः (Vedanta) by Sri Madhusudanasarasvati | 0 | 4 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 74— श्रीयाज्ञवल्क्यस्मृतिः (Dharmasâstra) with the commentary Bâlakrîdâ of Visvarûpâchârya. (Part I—Âchâra and Vyavahâra Adhyâyas) | 4 | 0 | 0 |
| No. 75—शिल्परत्नम् (Silpa) by Srîkumâra (Part I). | 3 | 4 | 0 |
| No. 76—आर्यमञ्जुश्रीमूलकल्पः (Part II). | 3 | 4 | 0 |
| No. 77—ईशानशिवगुरुदेवपद्धतिः by Isanasivagurudeva-misra (Part III. Kriyapada 1—30 Patalas). | 3 | 4 | 0 |
| No. 78—आश्वलायनगृह्यसूत्रम् with the commentary Anavila of Haradattacharya. | 5 | 0 | 0 |
| No. 79—अर्थशास्त्रम् of Kautalya with the commentary by Mahamahodpahyaya T. Ganapati Sastri (Part I—1 & 2 Adhikaranas). | 8 | 0 | 0 |

***Apply to:—***

*The Curator,*

*for the publication of Sanskrit Manuscripts,*

*Trivandrum.*